तस्योर्द्ध्वे हृदि पङ्कजं सुललितं बन्धूककान्त्युज्ज्वलं
काद्यैर्द्वादशवर्णकैरुपहितं सिन्दूररागान्वितैः ।
नाम्नानाहतसंज्ञकं सुरतरुं वाञ्छातिरिक्तप्रदं
वायोर्म्मण्डलमत्र धूमसदृशं षट्कोणशोभान्वितम् ॥ २२ ॥

---

शुक्लीकृतदेहः रुद्ररूपः । पद्मकर्णिकायां रक्तपद्मोपरि लाकिनीशक्तिः नीलवर्णा त्रिवक्त्रा त्रिनेत्रा चतुर्भुजा वज्रशक्त्यभयवरकरा घोरदंष्ट्रा रक्तयुक्तखेचरान्न-मांसाभिलाषिणीति ॥ इति तृतीयप्रकरणम् ॥ * ॥

हृदि पङ्कजं निरूपयति तस्योर्द्ध्वे इत्यादि षड्भिः । हृदि पङ्कजमिति । एवम्भूतं पङ्कजं हृदि ध्यायेदिति क्रियाध्याहारेणान्वयः । सुललितं सुस्निग्ध-मित्यर्थः । काद्यैरिति । क ख ग घ ङ च छ ज झ ञ ट ठ इति द्वादश-वर्णकैरिति बोध्यम् । तैरुपहितं युक्तमित्यर्थः । नाम्नानाहतसंज्ञकमिति ।

शब्दब्रह्ममयः शब्दोऽनाहतस्तत्र दृश्यते ।
अनाहताख्यं पद्मं तत् मुनिभिः परिकीर्त्तितम् ॥

इति वचनादनाहतनामपद्ममिति तात्पर्य्यम् । यतः सुरतरुं कल्पतरु-स्वरूपमतो वाञ्छातिरिक्तफलप्रदमिति हेतुगर्भविशेषणमिति भावः । तत्पद्म-कर्णिकायां वायुमण्डलस्थितिमाह वायोरिति ॥ २२ ॥

---

(२२) तस्योर्द्ध्वे इति । तस्य पद्मस्य ऊर्द्ध्वे हृदि सुललितं मनोरमं नाम्ना अनाहतसंज्ञकं पद्ममास्ते । कीदृशम् ? बन्धूककान्तिवदुज्ज्वलं सिन्दूरराग इव अञ्चितैः प्राप्तैः ककाराद्यैः ठकारान्तै-र्द्वादशसंख्यकवर्णैर्दलमध्यवर्त्तिभिरुपशोभितम् । पुनः कीदृशम् ? सुरतरुः कल्पवृक्षस्तत्तुल्यं अतो वाञ्छातिरिक्तप्रदं वाञ्छितस्याप्यतिरिक्तं ददातीति तत्तथा ।

अयम्भावः—कल्पवृक्षाः पूर्णवाञ्छितफलदातारः, अयन्तु तदतिरिक्तं मोक्षं फलञ्च ददाती-त्यर्थः । अत्रैव मण्डले वायोर्म्मण्डलं विद्यते । कीदृशम् ? धूमसदृशम् । पुनः कीदृशम् ? षट्कोण-कोणस्य या शोभा तया अन्वितम् । [ एतन्मते "सिन्दूरागाञ्चितैः" इति पाठः । ]

तन्मध्ये पवनाक्षरञ्च मधुरं धूमावलीधूसरं
ध्यायेत्पाणिचतुष्टयेन लसितं कृष्णाधिरूढं परम् ।
तन्मध्ये करुणानिधानममलं हंसाभमीशाभिधं
पाणिभ्यामभयं वरञ्च विदधल्लोकत्रयाणामपि ॥ २३ ॥
अत्रास्ते खलु काकिनी नवतड़ित्पीता त्रिनेत्रा शुभा
सर्व्वालङ्करणान्विता हितकरी सम्यग् जनानां मुदा ।
हस्तैः पाशकपालशोभनवरान् संबिभ्रती चाभयं
मत्ता पूर्णसुधारसार्द्रहृदया कङ्कालमालाधरा ॥ २४ ॥

---

वायुमण्डलमध्ये वायुवीजमाह तन्मध्य इति । पवनाक्षरं यं इति वीजं मधुरं मनोहरम् । धूमावलीधूसरमिति । धूमश्रेण्यावृतदेहत्वात् धूमधूम्रवर्ण-मिति भावः । कृष्णाधिरूढ़मिति कृष्णसाराधिरूढ़मित्यर्थः । वरुणहस्ते पाशदर्शनादत्र वायुहस्तेऽङ्कुशो ध्येयः । वायुवीजमध्ये ईशस्थितिमाह तन्मध्य इति स्पष्टम् । सर्व्वत्र शिवस्य त्रिनेत्रं शिवस्य त्रिनेत्रत्वादयं त्रिनेत्रः । एवं "ग्रैवेयाङ्गदहारनूपुरयुतं क्षौमाम्बरं चिन्तयेत्" इत्यादिकर्म्मान्तरोक्तध्यानप्राप्त-क्षौमाम्बरत्वमीशस्य । एवं "कान्तं कान्तशशाङ्ककोटिकिरणं प्रोद्यत्कपर्द्दो-ज्ज्वलम्" । इति ॥ २३ ॥

अत्र कर्णिकायां काकिनीशक्तिस्थितिमाह अत्रास्ते इति । मत्ता

---

(२३) तन्मध्ये इति । तस्य मण्डलस्य मध्ये पवनाक्षरं वायुवीजम् । अक्षरपदेन वीज-मुच्यते । एतत् प्रकारं यस्य मण्डलं तस्यैव वीजमिति दृष्टत्वात् । कीदृशम् ? मधुरं हृदयङ्गमम् । पुनः कीदृशम् ? दीपकलिकाकारं जीवात्मसम्बन्धिनी या धूमावली तया धूसरम् । पाणिचतुष्टयेन लसितं कृष्णाजिनाधिरूढ़ं परं प्रहृष्टञ्च एवम्भूतं वीजं ध्यायेत् । तत्र वायुमण्डले ईश एवा-भिधा नाम यस्य एवम्भूतं स्थूलपाणेर्व्वपुरास्ते । कीदृशम् ? करुणावारिधिस्वरूपम् अमलं निर्म्मलं हंसाभं सूर्य्य इव शोभा यस्य । पुनः कीदृशम् ? पाणिभ्यां कराभ्यां अभयं वरञ्च लोकत्रयाणा-मपि विदधत् । एतेन इयं मूर्त्तिः हस्तपादादिविशिष्टेति ।

(२४) अत्रास्ते इति । अत्रैव पद्मे खलु निश्चितं काकिनी देवी आस्ते । नूतनविद्युदिव

**एतन्नीरजकर्णिकान्तरलसच्छक्तिस्त्रिकोणाभिधा**
**विद्युत्कोटिसमानकोमलवपुः सास्ते तदन्तर्गतः ।**
**वाणाख्यः शिवलिङ्गकोऽपि कनकाकाराङ्गरागोज्ज्वलो-**
**मौलौ सूक्ष्मविभेदयुङ्मणिरिव प्रोल्लासलक्ष्म्यालयः ॥२५॥**

---

अस्खभावस्था स्खलितभावा। पूर्णसुधारसार्द्रहृदयेति। पूर्णः सम्पूर्णः तृप्तिजनको यः सुधारसस्तेनार्द्रं परोपकाराभिमतकोमलं हृदयं चित्तं यस्या इत्यर्थः। यद्वा पूर्णः पूर्णानन्दजनको यः सहस्रदलकमलान्तर्विगलितपरमामृतरसस्तेनार्द्रं परमानन्दोत्फुल्लशिथिलं हृदयं यस्या इत्यर्थः। अन्यत् स्पष्टम्।

कृष्णाम्बरपरीधानां नानाभरणभूषिताम्।
ध्यायेत् शशिमुखीं नित्यां काकिनीं मन्त्रसिद्धये॥

इति ध्यानप्राप्तकृष्णाम्बरत्वमस्या बोध्यम्॥ २४॥

एतत्पद्मकर्णिकामध्ये त्रिकोणं निरूपयति एतदिति। त्रिकोणाभिधा त्रिकोणाकारा शक्तिरित्यनेन त्रिकोणस्याधोमुखत्वं ज्ञापितम्। सा आस्ते इत्यन्वयः। एतत्त्रिकोणं वायुवीजस्याधोदेशे। तदाहान्यत्र—

तत्क्रोड़े ईशं तदधस्त्रिकोणे वाणलिङ्गकम्॥ इति॥

वाणाख्यलिङ्गं विशेषयति मौलौ सूक्ष्मविभेदः। शिवलिङ्गमस्तकेऽर्द्ध-

---

पीतवर्णा। त्रीणि नेत्राणि यस्याः सा। शुभाशुभदायिका, सर्व्वालङ्कारैरावृता, मुदा हर्षेण जनानां सम्यक्प्रकारेण हितकरी। चतुर्भिर्हस्तैः कपालशूलशोभनवराभयान् संबिभ्रती। मत्ता उन्मत्ता, कङ्कालमालाधरा अस्थिमाल्यधरा।

(२५) एतन्नीरज इति। एतत्पद्मकर्णिकान्तरप्रकाशात् त्रिकोणाभिधा शक्तिरास्ते। प्रसिद्धत्वादस्येति। तदन्तर्गता सती चास्ते इति सम्बन्धः। यद्वा स एव शिवः अन्तर्गतो यस्याः सा तथा। तस्याः शक्तेः मौलावुपरि वाणाख्यः शिवलिङ्गकः समास्ते। स्वर्णाकारेणाङ्गरागेणोज्ज्वलः सूक्ष्मरूपेण विशेषभेदं युनक्तीति। एवम्भूतो मणिरिव। पुनः कीदृशः? प्रोद्दामलक्ष्म्यालयः सूक्ष्मभेदकत्वात् तस्याः शक्तेरेव प्रकृष्टोद्दामसश्रियः तत्रालय इति। [ अत्र मते "प्रोद्दामलक्ष्म्यालयः" पाठः ]।

ध्यायेद्यो हृदि पङ्कजं सुरतरुं शर्व्वस्य पीठालयं
देवस्यानिलहीनदीपकलिकाहंसेन संशोभितम् ।
भानोर्म्मण्डलमण्डितान्तरलसत्किञ्जल्कशोभाधरं
वाचामीश्वर ईश्वरोऽपि जगतां रक्षाविनाशे क्षमः ॥ २६ ॥

---

चन्द्रविन्दुयोगात् तद्बिन्दुमध्ये शून्यरूपो विभेदश्छिद्रं तेन युक्त इत्यर्थः तदाह यद्वा—

त्रिकोणान्तर्व्वाणलिङ्गं कनकाभरणैर्युतम् ।
चन्द्रार्द्धमस्तकं देवं मध्ये रक्ताम्बुजं परम् ॥ इति ॥

मध्ये रक्ताम्बुजमिति हृत्पद्मस्य कर्णिकाधोदेशे ऊर्द्ध्वमुखरक्तवर्णाष्टदलपद्ममित्यर्थः । एतत्पद्मोपरि मानसपूजा कार्य्या । तदुक्तं यथा—

तन्मध्येऽष्टदलं रक्तं तत्र कल्पतरुं तथा ।
इष्टदेवासनं चारुचन्द्रातपविराजितम् ॥

तथा—

नानापुष्पफलैर्युक्तं मञ्जुवाक्पक्षिशोभितम् ।

इत्याद्यभिधाय

तत्र ध्यायेदिष्टदेवं तत्तत्कल्पोक्तमार्गतः ॥ इति ॥

अलं विस्तरेण प्रकृतमनुसरामः । वाणलिङ्गमस्तके विन्दुप्रकाशदृष्टान्तमाह मणिरिवेति । यथा सरन्ध्रमणिप्रकाशस्तथा शिवलिङ्गोपरि विन्दुप्रकाश इति भावः । प्रोल्लासलक्ष्म्यालय इति प्रोल्लासः कामोद्गमः तच्छोभायुक्त इत्यर्थः ॥ २५ ॥

हृत्पद्मचिन्तनफलमाह ध्यायेदित्यादिद्वाभ्याम् । अस्यार्थः यो जनो हृदि

---

(२६) ध्यायेदिति । य एतत् पद्मं कल्पवृक्षतुल्यं हृदि ध्यायेत् सः एवमेवम्भवति । वाचामीश्वरः वृहस्पतितुल्यः जगतामीश्वरः रक्षाविनाशक्षमश्च अर्थात् जगताम् । कीदृशं ? शर्व्वस्य देवस्य

पङ्कजं ध्यायेत् स जनो वाचामीश्वरो वृहस्पतिसमो भवति एवं सर्व्वत्र ईश्वर इत्यादिप्रथमान्तेन भवति क्रियान्वयो बोध्यः ।

अत्र पद्मकर्णिकायां हंसरूपजीवात्मस्थितिमाह अनिलहीनदीपकलिका-हंसेन संशोभितमिति । वायुरहिता या दीपकलिका तत्सदृशहंसेन संशोभितमित्यर्थः । ततश्च पद्मकर्णिकायां वाताहतिरहितस्थिरतरदीपशिखा-कारहंसरूपः जीवात्मा वर्त्तते इति भावः ।

एतत्कर्णिकायां सूर्य्यमण्डलस्थितिं ज्ञापयति । भानोर्म्मण्डलमण्डि-तान्तरलसत्किञ्जल्कशोभाधरमिति । भानोर्म्मण्डलेन मण्डिता भूषिता ये अन्तरलसन्तः कर्णिकामध्ये प्रकाशमानाः किञ्जल्काः केशराः अथवा याः किञ्जल्कशोभास्ताधारयतीत्यर्थः । अत्र भानुमण्डलमण्डितत्वं किञ्ज-ल्कविशेषणं नत्वन्तरविशेषणं तथात्वे सर्व्वस्मिन् पद्मे किञ्जल्कशोभाधर-त्वादत्र विशेषोपादानं व्यर्थं स्यात् । भानोर्म्मण्डलमण्डितत्वविशेषण-विशिष्टत्वे तादृशविशिष्टकिञ्जल्कानामन्यत्रासत्त्वात् तदुपादानं सार्थकमिति । एवञ्च भानोर्म्मण्डलस्य कर्णिकारूपकत्वे तत्तेजसा सर्व्वेषां किञ्जल्कानां शोभाधिक्यरूपमण्डितत्वं सम्भवति न त्वेकदेशस्थितत्वे ।

ततश्च तत्कर्णिकायामादौ कर्णिकाव्यापकं वायुमण्डलं तदुपरि तथा सूर्य्यमण्डलम् । तदुपरि वायुवीजत्रिकोणादिकं ध्येयम् । युक्तञ्चैतत् मान-सार्च्चनायां "मं वह्निमण्डलाय दशकलात्मने नमः" इत्यादिना पूजायाम् उपर्य्युपरिक्रमेण वह्न्यर्कचन्द्रमण्डलस्थितिदर्शनात् दृष्टपरिकल्पनान्यायावता-रात् । अलमति विस्तरेण ।

ईश्वर इति सृष्टिकर्त्ता इत्यर्थः । रक्षाविनाशे क्षमः स्थितिप्रलयकर्त्ता इत्यर्थः । तेन स जनः सृष्टिस्थितिप्रलयकर्त्तेति तात्पर्य्यार्थः ॥ २६ ॥

---

पीठात्त्रयम् । पुनः कीदृशं ? अनिलहीनदीपकलिकारूपहंसेनात्मना संशोभितम् । भानोर्मण्डलेन मण्डिते अन्तरे लसत्प्रकाशमानः केशरशोभाभावो यस्य तत्तथा ।

योगीशो भवति प्रियात् प्रियतमः कान्ताकुलस्यानिशं
ज्ञानीशोऽपि कृती जितेन्द्रियगणो ध्यानावधानक्षमः।
गद्यैः पद्यपदादिभिश्च सततं काव्याम्बुधारावहो
लक्ष्मीरङ्गणदैवतः परपुरे शक्तः प्रवेष्टुं क्षणात्॥ २७॥

---

योगीश इति। प्रियात् प्रियतमः कान्ताकुलस्येति योषिद्वर्गस्य कम्म-कुशलः। जितेन्द्रियगण इति जितेन्द्रियाणां मध्ये गण्यते तुल्यत्वेन स्तूयते असावित्यर्थः। ध्यानावधानक्षमः ध्याने ब्रह्मचिन्तने अवधानाय स्थिरमनो-ऽभिनिवेशं कर्त्तुं क्षमः समर्थ इत्यर्थः। काव्याम्बुधारावह इति काव्यरूपाम्बूनां धारा अविच्छेदनिःसरणम् उह्यते धार्य्यते येन तादृशो भवतीति।

लक्ष्मीरङ्गणदैवतः। विष्णुसदृश इत्यर्थः। यद्वा लक्ष्मीः सम्पत्तिः रङ्ग-णम् आनन्दानुभवः दैवम् अदृष्टं तत्समूहो दैवता जनतावत् ततश्च लक्ष्मी-भीरङ्गणाय दैवता यस्येति बहुव्रीह्यर्थे णप्रत्ययेन तत्पदं सिद्धम्। अत-एवोक्तम्।

इह भुक्त्वा वरान् भोगानन्ते मुक्तिपदं व्रजेत्॥ इति॥

परपुरे शक्तः प्रवेष्टुं क्षणादिति दुर्गद्वारपालादिना दुर्गमीकृतायामपि परपुर्य्यां प्रवेष्टुं शक्तः प्रवेशकारणभूतादर्शनाकाशगमनादियोग्यतापन्नो भव-तीत्यर्थः। अत्र केचित् दैवतमिति विन्दन्तं पठित्वा यद्यपि जनविशेषणतया

---

(२७) योगीश इति। एतत्पङ्कजध्यानपरोजनः एवम्भवति। योगीशः कान्ताकुलस्य सर्व्व-स्त्रीणां प्रियात् स्वामिनोऽपि प्रियतमो भवति। ज्ञानीशः कृती च भवति। जितं इन्द्रियं मनो येन स तथा। ध्यानेनावधाने क्षमो भवति। गद्यैः संस्कृतवाक्यैः पद्यपदादिभिः श्लोकादिप्रबन्धैः गद्यपद्यरूपाम्बुधारावहो भवति। अत्यन्तवर्षणशीलः मेघरूपो भवति इति यावत्। लक्ष्मीतत्-कुलदैवतमिति प्रशस्तलक्ष्म्याश्रयः कुलश्रेष्ठश्च भवति इत्यर्थः। यद्वा लक्ष्मीविशिष्टा कुलदेवता यस्य सः तथा स सत्कुलीनो भवतीति यावत्। दैवतमिति स्वार्थे अण्। एवं सः क्षणादेव परपुरे अन्यशरीरे प्रवेष्टुं समर्थो भवति। कुमारीतन्त्रे परपुरप्रवेशस्याप्येतत्पद्मध्यानफलत्वेनाभि-धानात्। [एतन्मते "लक्ष्मीतत्कुलदैवतम्" इति पाठः]।

**विशुद्धाख्यं कण्ठे सरसिजममलं धूमधूम्रावभासं**
**स्वरैः सर्वैः शोणैर्दलपरिलसितैर्दीपितं दीप्तबुद्धेः।**
**समास्ते पूर्णेन्दुप्रथिततमनभोमण्डलं वृत्तरूपं**
**हिमच्छायानागोपरि लसिततनोः शुक्लवर्णाम्बरस्य॥ २८॥**

---

दैवतमित्यस्य पुंस्त्वं भवितुं पार्थ्यते तथाप्यजहल्लिङ्गत्वान्नपुंसकत्वमिति वदन्ति। तन्न "वृन्दारका दैवतानि पुंसि वा देवता स्त्रियाम्" इत्यमरकोषे दैवतशब्दस्य पुंनपुंसकत्वकथनात् दैवत इति विसर्गान्तपाठोऽपि साधुः। प्रदर्शितार्थे तु सुतरां तथेति। स्पष्टमन्यत्॥ २७॥ *॥

**तदयं महावाक्यार्थनिर्णयः।** हृत्पद्मं बन्धूकाभं सिन्दूराभसविन्दु क ख ग घ ङ च छ ज झ ञ ट ठ इति द्वादशवर्णयुक्तद्वादशदलम्। तत्कर्णिकायां षट्कोणाकारवायुमण्डलं धूमाभम्। तदुपरि सूर्य्यमण्डलम्। तन्मध्ये विद्युत्कोटिनिभत्रिकोणम्। तदूर्द्ध्वे वायुवीजं कृष्णसाराधिरूढं धूमधूम्राभं चतुर्भुजम् अङ्कुशहस्तम्। तत्क्रोडे हंसाभ ईशः द्विभुजः वराभयकरः त्रिनेत्रः। अत्र कर्णिकायां रक्तपद्मोपरि काकिनी शक्तिः पीतवर्णा चतुर्भुजा पाशकपालवराभयकरा पीतवस्त्रा सर्व्वालङ्करणान्विता सुधार्द्रहृदया कङ्कालमालाधरा। मध्यत्रिकोणे वाणलिङ्गशिवः अर्द्धचन्द्रविन्दुरूपमस्तकः स्वर्णवर्णः कामोद्गमोल्लसितः। तदधः स्थिरतरदीपकलिकाकारहंसरूपी जीवात्मा। एतत्कर्णिकाधोरक्तवर्णोर्द्ध्वमुखाष्टदलपद्मम्। तत्र कल्पवृक्षरत्नवेदीचन्द्रातपपताकाद्यलङ्कृतं मानसपूजास्थानम्॥ इति चतुर्थप्रकरणम्॥ *॥

इदानीं कण्ठदेशे विशुद्धचक्रं निरूपयति विशुद्धाख्यमित्यादिचतुर्भिर्व्विशुद्धाख्यमिति।

---

(२८) विशुद्धाख्यमिति। अन्यत् निर्म्मलं विशुद्धाख्यं पद्मं कण्ठे आस्ते। किम्भूतं? धूम्रेण या धूम्राभा तस्या इव द्युतिर्यस्य तत्तथा। पुनः कीदृशं? सर्व्वैः षोड़शस्वरैः रक्ताकारैर्दलैः परिलसितैर्दीपितं प्रकाशितम्। दीप्तबुद्धेर्दीपाकारबुद्धेर्जनस्य ज्ञानविषयी भवतीत्यर्थः। तत्रैव पद्मे शुक्ल-

विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात्।

विशुद्धं पद्ममाख्यातम् आकाशाख्यं महत् परम्॥ इति॥

अस्यार्थः कण्ठे विशुद्धाख्यं विशुद्धनामकं सरसिजं समास्ते इत्यन्वयः। पद्मं विशेषयति अमलमिति तेजोमयत्वात् मलरहितमित्यर्थः। स्वरैः सर्व्वैः अकारादिविसर्गान्तैः षोड़शस्वरैर्दीप्तबुद्धेः निरन्तरयोगाभ्यासेन विषयानुरागरूपमलरहितत्वेन प्रकाशितबुद्धेः साधकस्य सम्बन्धे दीपितं प्रकाशितमित्यर्थः। स्वरैः कीदृशैः ? दलपरिलसितैरिति। एतेन स्वराणां षोड़शत्वादेतत् पद्मं षोड़शदलमिति सूचितम्। व्यक्तमाहान्यत्र—

तदूर्द्ध्वे षोड़शदलं पङ्कजं धूम्रवर्णकम्।

युक्तं शोणैः षोड़शभिः स्वरैर्व्विन्दुविभूषितैः।

आरक्तकिञ्जल्कयुतं व्योममण्डलमण्डितम्॥ इति॥

तथा पूर्णेन्दुप्रथिततमनभोमण्डलं पूर्णचन्द्रमण्डलवत् सम्पूर्णं शुक्लवर्णञ्च अतएव "तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधा" इति सारदोक्तवचनेन मण्डलानां तत्तद्दैवतभूतसमानवर्णविधानात् नभसः शुक्लवर्णत्वात्तन्मण्डलस्यापि शुक्लवर्णत्वं प्रतीयते। नभोमण्डलं वृत्तरूपं समास्ते एतत्पद्मकर्णिकायामिति शेषः। शुक्लवर्णाम्बरस्येति नभोमण्डलस्य मध्ये शुक्लवर्णस्याम्बरस्याकाशस्याङ्के "सदापूर्व्वोदेवः शिव इति च समाख्यानसिद्धः" सदाशिवनाम्नाख्यातो देवः सततं निवसतीति द्वितीयश्लोकेनान्वयः। अम्बरस्य कीदृशस्य ? हिमच्छायानागोपरि लसिततनोः हिमच्छायया नागः हिमच्छायानागः इति तृतीयान्ततत्पुरुषेण हिमोपमाविशिष्टनाग इत्यर्थः। यद्वा हिमच्छायातुल्यो नाग इति शाकपार्थिवादित्वात् मध्यपदलोपे तत्पदसिद्धा शुक्लवर्णनाग इत्यर्थः। अत्र नागो हस्ती व्यक्तमाह भूतशुद्धौ—

तदन्तर्व्योमवीजञ्च शुक्लं हैमगजस्थितम्॥ इति॥

---

वर्णाम्बरधरस्य विष्णोः पूर्णेन्दुरिव प्रथिततमं ख्यातं नभोमण्डलं समास्ते। यद्वा पूर्णेन्दुनाख्याततमम्। "वियद्विष्णुपदम्" इत्यमरः। विष्णोः किम्भूतस्य ? हिमवर्णाभकान्तिर्विभा यस्य एवम्भूतस्य नागस्योपरि लसिता तनुर्यस्य।

भुजैः पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्गस्य तस्य
मनोरङ्के नित्यं निवसति गिरिजाभिन्नदेहो हिमाभः ।
त्रिनेत्रः पञ्चास्यो ललितदशभुजो व्याघ्रचर्म्माम्बराढ्यः
सदा पूर्व्वोदेवः शिव इति च समाख्यानसिद्धः प्रसिद्धः ॥२९॥

---

हैमेति हिमस्यायमितीदमर्थतद्धितप्रत्ययेन हैमगजः शुक्लहस्ती इत्यर्थः । ततश्च शुक्लहस्त्युपरि परिलसिता प्रकाशमाना तनुर्यस्य तादृशस्येत्यर्थः ॥ २८ ॥

भुजैरिति । पुनः कीदृशस्य ? भुजैः पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्गस्येति पाशाङ्कुशवराभयहस्तस्येति फलितार्थः । पुनः कीदृशस्य ? मनोरिति । हं इत्याकाशवीजं तदात्मकस्येत्यर्थः । तेनात्र कर्णिकान्तरे नभोवीजं स्थितं तत्तु उक्तरूपेण चिन्तनीयमिति तात्पर्य्यम् ।

सदाशिवं विशेषयति गिरिजाभिन्नदेह इति अर्द्धनारीश्वर इत्यर्थः । हिमाभः शुक्लवर्णः ततश्चार्द्धनारीश्वरत्वाद्वामार्द्धदेहं सुवर्णाभं दक्षिणार्द्धं शुक्लम् इति । व्यक्तमाह—

शुक्लाम्बरेण संवीतं तत्र देवं सदाशिवम् ।
गिरिजाभिन्नदेहार्द्धं रौप्यहैमशरीरकम् ॥ इति ॥

तत्र नभोवीजक्रोड़े इत्यर्थः । तथा सदा सुधास्राविचन्द्रमसः कलाधोमुखान्वितम् इति ।

---

(२९) भुजैरिति । तस्य विष्णोर्मनोरङ्के वीजाकारमूर्त्तेरङ्के पञ्चास्यः शिवो निवसति नित्यमेव । तस्य किम्भूतस्य ? पाशाभीत्यङ्कुशपरिलसितभुजैः शोभिताङ्गस्य । शिवः किम्भूतः ? गिरिजया पार्व्वत्याऽभिन्नो देहो यस्य हरगौरीमूर्त्तिरित्यर्थः । पुनः कीदृशः ? हिमस्येव शोभा यस्य । त्रिनेत्रः मनोज्ञा दशभुजा यस्य स तथा । व्याघ्रचर्म्माम्बरैर्युक्तः । यद्वा व्याघ्रचर्म्मणा साम्बरेण च युक्तः हरगौर्य्यात्मकत्वात् सदाशिव इति समाख्यानसिद्धः नित्यस्वरूपप्रसिद्धः योगिनां मनसि प्रकाशः ।

सुधासिन्धोः शुद्धा निवसति कमले शाकिनी पीतवस्त्रा
शरं चापं पाशं सृणिमपि दधती हस्तपद्मैश्चतुर्भिः ।
सुधांशोः सम्पूर्णं शशपरिरहितं मण्डलं कर्णिकायां
महामोक्षद्वारं श्रियमभिमतशीलस्य शुद्धेन्द्रियस्य ॥ ३० ॥

---

निर्व्वाणतन्त्रे विशुद्धचक्राधिकारे—

यन्त्रमध्ये च वृषभं महासिंहासनन्ततः ।
तस्योपरि सदा गौरी दक्षभागे सदाशिवः ॥
त्रिनेत्रः पञ्चवक्त्रश्च प्रतिवक्त्रे त्रिलोचनम् ।
विभूतिभूषिताङ्गश्च रजताचलसोदरः ।
व्याघ्रचर्म्मधरो देवो फणिमालाविभूषित ॥ इत्यादि ।

"तस्योपरि सदा गौरी" इति शिवस्यार्द्धाङ्गरूपेण स्थितेति ।

व्यक्तमाह तत्रैव—

या गौरी लोकमाता च शम्भोरर्द्धाङ्गहारिणी ॥ इति ॥

ललितदशभुज इति । लावण्येन प्रशंसितदशहस्तयुक्त इत्यर्थः । अत्र देवस्य दशभुजेष्वस्त्रविशेषानभिधानात्—

शूलं टङ्कृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान्
पाशाभीतिहरं दधानममिताकल्पोज्ज्वलाङ्गं भजे ।

इति ध्यानान्तरे यान्यस्त्राण्युक्तानि तान्यस्य भुजेषु चिन्तनीयानीति ध्येयम् । प्रसिद्ध इति प्राधान्येन ख्यात इत्यर्थः । अन्यत् सुगमम् ॥ २९ ॥

एतत्पद्मकर्णिकायां शाकिनीशक्तिस्थितिमाह सुधासिन्धोरित्यादि । कमले विशुद्धचक्रकर्णिकायां शाकिनीनाम्नी शक्तिर्निवसति इत्यन्वयः । तां विशेष-

---

(३०) सुधासिन्धोरिति । तत्र कमले पीतवर्णा शाकिनी निवसति । कीदृशी ? सुधासिन्धोश्चन्द्रात् शुद्धसम्बन्धीययाऽमृतधारया शुद्ध इति यावत् । चतुर्भिर्हस्तपद्मैः शरं चापं पाशं सृणिमपि दधती तस्य पद्मस्य कर्णिकायां सुधांशोश्चन्द्रस्य शशपरिरहितं सम्पूर्णमण्डलम् आस्ते ।

यति सुधासिन्धोः शुद्धा इति। सुधासमुद्रसदृशशुक्लवर्णा तथाच यथा सुधासिन्धोरमृतमयसुशीतलशुक्लत्वं तथा ज्योतिःस्वरूपायाः शाकिन्या उत्तापरहितशुक्लकिरण इति भावः। ध्यानान्तरे शाकिनीं विशेषयति—

देवीं ज्योतिःस्वरूपां त्रिनयनलसितां पञ्चवक्त्राभिरामां
हस्तैः पद्मैश्च पाशं शृणिमपि दधतीं पुस्तकं ज्ञानमुद्राम्।
ध्यायेत् कण्ठस्थपद्मे निखिलपशुजनोन्मादिनीमस्थिसंस्थां
दुग्धान्ने प्रीतियुक्तां मधुमदमुदितां शाकिनीं साधकेन्द्रः॥ इति॥

ज्योतिःस्वरूपां ज्योतिषां स्वभावतः शुक्लवर्णत्वेनेयं शुक्लवर्णा। अत्र ध्यानद्वये द्विविधास्त्वदर्शनादिच्छाविकल्पः। इयं देवी कर्णिकान्तश्चन्द्रमण्डले वर्त्तते। तदाह प्रेमयोगतरङ्गिण्याम्—

तत्रास्ते शाकिनी शक्तिः शुधांशोर्म्मण्डले शुभे॥ इति॥

एतत्कर्णिकायां शुधांशोश्चन्द्रस्य शशपरिरहितं निष्कलङ्कं सम्पूर्णं मण्डलमपि विलसतीति पूर्व्वक्रियायामन्वयः। मण्डलं विशेषणेन प्रशंसति महामोक्षेत्यादि। एतन्मण्डलं शुद्धेन्द्रियस्य जितेन्द्रियस्य महामोक्षद्वारं निर्व्वाणमुक्तिमाहुः। एतच्चिन्तनादियोगमार्गमवलम्ब्य मुक्तिमाप्नोतीति भावः। श्रियमभिमतशीलस्येति। श्रियं योगलक्ष्मीमभिमन्यते आकाङ्क्षतीति श्रियमभिमतम्। तादृशं शीलं स्वभावो यस्य तद्रूपस्य शुद्धेन्द्रियस्येति विशिष्टार्थः। अत्र कर्णिकायां चन्द्रमण्डलादिस्थितिप्रकारस्तु आदौ कर्णिकान्तर्नभोमण्डलं तन्मध्ये त्रिकोणं तदन्तश्चन्द्रमण्डलं तन्मध्ये नभोवीजादिकमिति।

तद्यथा—

कर्णिकायां त्रिकोणस्थं पूर्णचन्द्रन्तु चिन्तयेत्।
हैमाभं गजमारूढमाकाशं तत्र चिन्तयेत्॥
शुक्लाम्बरेण संवीतं तत्र देवः सदाशिवः॥ इति॥

शुक्लाम्बरेण संवीतमाकाशमिति॥ ३०॥

---

कीदृशम्? मोक्षद्वारं निर्व्वाणमुक्तिद्वारम्। पुनः कीदृशम्? उल्वणबुद्धिशीलस्य जितेन्द्रियस्य श्रियं दधानम् इत्यर्थः।

इह स्थाने चित्तं निरवधि विनिधायात्मसम्पूर्णयोगः
कविर्व्वाग्मी ज्ञानी स भवति नितरां साधकः शान्तचेताः।
त्रिकालानां दर्शी सकलहितकरो रोगशोकप्रमुक्त-
श्चिरञ्जीवी जीवी निरवधि विपदां ध्वंसहंसप्रकाशः॥ ३१॥

विशुद्धचक्रचिन्तनफलमाह इह स्थाने इति। आत्मसम्पूर्णयोग इति आत्मनि ब्रह्मणि सम्पूर्णो सर्व्वव्यापकत्वेन परिपूर्णो योगो ज्ञानं यस्य तादृशः। आत्तसम्पूर्णयोग इति पाठे आत्तः प्राप्तः सम्पूर्णयोगो येनेत्यर्थः। अतएवोक्तं श्रीमदाचार्य्येण—"पूर्णबोधात्मना तिष्ठेत् पूर्णाचलसमुद्रवत्" इति। ततश्च यः साधक इह स्थाने निरवधि चित्तं विनिधाय आत्मसम्पूर्णयोगो भवति, स ज्ञानी उपदेशं विना सर्व्वशास्त्रार्थवेत्ता शान्तचित्तः शान्तिगुणावलम्बिचित्तः।

दया भूतेष्वलोलुप्त्वमार्द्दवं ह्रीरचापलम्।
तेजः क्षमा धृतिः शौचमद्रोहोऽनभिमानिता॥

इत्यादिगुणोपहितचित्त इति यावत्। त्रिकालानां दर्शीति। अत्र केचित् ज्ञानलक्षणात्मकाः लौकिकसन्निकर्षरूपयोगधर्म्मेण सर्व्वं पश्यन्तीति। अन्ये तु तादृशजनस्यात्मप्रत्यक्षे तत्र भासमानसर्व्वप्रमेयवस्तूनां प्रत्यक्षो भवतीति वदन्ति। रोगशोकप्रमुक्तः सिद्धमन्त्रत्वाद्रोगमुक्तश्चिरञ्जीवी छिन्नमायापाशत्वात् शोकरहित इत्यर्थः। स जीवी जनः नितरामतिशयकविर्भवति एवं सर्व्वत्र भवति क्रियान्वयः। निरवधि विपदां ध्वंस इति। अवधिः सीमा तद्रहित-विपन्निरवधिविपत् आदिना पापपुण्यरूपकर्म्मबन्धे नानाविपत्तिरिति यावत्। तेषां ध्वंसाय विपत्तिप्रागभावासमानकालीनविपत्तिनाशाय फलतो मोक्षाय

(३१) इह स्थाने इति। इह विशुद्धे पद्मे चित्तं यो निधायात् तस्य सम्पूर्णयोगविषये ज्ञानं भवतीत्यर्थः। अथवा तत्सर्व्वमेव सम्पूर्णयोगत्वेनोपदिष्टं तदेवाह क्रमेण। कविः स जनः कविर्वाग्मीत्यादि। निरवधि नित्यमेव विपत्प्राप्तानां त्राणे सूर्य्य इव तेजस्वी भवति।

**आज्ञानामाम्बुजन्तद्धिमकरसदृशं ध्यानधामप्रकाशं**
**हक्षाभ्यां वै कलाभ्यां परिलसितवपुर्नेत्रपत्रं सुशुभ्रम् ।**
**तन्मध्ये हाकिनी सा शशिसमधवला वक्त्रषट्कं दधाना**
**विद्यां मुद्रां कपालं डमरुजपवटीं बिभ्रती शुद्धचित्ता ॥ ३२ ॥**

---

हंसस्य सहस्रदलकमलकर्णिकान्तर्गतहंसरूपान्तरात्मनः प्रकाशो यस्य तादृशो भवतीति । स्पष्टमन्यत् ॥ ३१ ॥ * ॥

**तदयं महावाक्यार्थनिर्णयः ।** कण्ठमूले विशुद्धचक्रं षोड़शदलं धूमधूम्ररूपम् आरक्तकेशरं रक्तवर्णसविन्दुकषोड़शस्वरयुक्तम् । कर्णिकायां नभोमण्डलं वृत्तरूपं शुक्लवर्णम् । तन्मध्ये त्रिकोणं तत्र चन्द्रमण्डलम् । तदुपरि हं इति नभोवीजं शुक्लवर्णं शुक्लाम्बरपरीधानं शुक्लगजारूढ़ं चतुर्भुजं पाशाङ्कुशवराभयधरम् । तत्क्रोड़े वृषभोपरि स्थितमहासिंहासने सदाशिवः अर्द्धनारीश्वरत्वादर्द्धाङ्गसुवर्णाभार्द्धाङ्गशुक्लाभः पञ्चवक्त्रः त्रिनेत्रः दशभुजः शूलटङ्कखड्गवज्रदहननागेन्द्रघण्टाङ्कुशपाशाभययुक्तदशहस्तः व्याघ्रचर्म्माम्बरः भस्मलिप्तसर्व्वाङ्गः नागहारशोभितः सुधास्राव्यधोमुखार्द्धचन्द्रशेखरः । एतत्कर्णिकायां चन्द्रमण्डलमध्ये अस्युपरि स्थिता शाकिनी शक्तिः शुक्लवर्णा चतुर्भुजा पाशाङ्कुशधनुःशरकरा पीताम्बरा पञ्चवक्त्रा त्रिनेत्रेति ॥ इति पञ्चमप्रकरणम् ॥*॥

इदानीं भ्रूमध्यस्थिताज्ञाचक्रं निरूपयति आज्ञानामाम्बुजमित्यादि सप्तभिः । "आज्ञासंक्रमणं तत्र भ्रुवोराज्ञेति कीर्त्तितम्" । आज्ञानामेति अत्र भ्रुवोराज्ञासंक्रमणादाज्ञानाम । ततश्च तन्नामकं तत्प्रसिद्धमम्बुजमास्ते इति क्रियाध्याहारेणान्वयः । एतत् पद्मं भ्रूमध्ये स्थितम् ।

---

(३२) आज्ञा इति । तत्प्रसिद्धं भ्रूमध्ये आज्ञानाम पद्मम् आस्ते । कीदृशम् ? हिमकरसदृशम् अतः प्रशस्तशुभ्रं ध्यानधामनि प्रकाशो यस्य तत् । हकारक्षकारोपलक्षितदलाभ्यां परिलसितं वपुर्यस्य । कलाभ्यामिति केचित् पठन्ति । तन्मते हकारक्षकाररूपकलाभ्यां स्वरविशिष्टाभ्यामिति । पुनः कीदृशम् ? नेत्रपत्रं द्विपत्रमित्यर्थः । एतत्पद्मे सा प्रसिद्धा हाकिनी निवसति । कीदृशी ? शशिसमधवलवर्णा षण्मुखी च । हस्तैः करणैरेतान् बिभ्रती विद्याज्ञानमुद्राकपाल-

तद्यथा—

तालुकण्ठं प्रविश्योर्द्ध्वं भ्रूयुगान्ते सितं शुभम् ।
द्विदलं हक्षवर्णाभ्यां मनोऽधिष्ठितमम्बुजम् ॥ इति ॥

पद्मं विशेषयति हिमकरसदृशमिति चन्द्रवच्छुक्लवर्णमित्यर्थः । तथा ध्यानधामप्रकाशं ध्यानस्य धाम्ना तेजसा तेजोरूपशक्त्या प्रकाशो यस्येत्यर्थः । अत्र ध्यानशक्त्या धामवत् प्रकाशितावयवमित्यर्थः । वर्णानां कलाबीजत्वात्तत्र कलापदप्रयोगः । नेत्रपत्रं द्विदलम् । सुशुभ्रम् इति हक्षाभ्यां सुशुभ्रमित्यर्थः । तथाच स्वभावशुभ्रं हक्षवर्णयोगेनातिशुभ्रमिति भावः । एतेन हक्षवर्णयोरपि शुक्लत्वं सूचितं शुक्लयोगेणैव शुक्लस्यातिशय्यसम्भवात् । यद्वा आज्ञाचक्रं हिमकरसदृशं चन्द्रस्यामृतमयशीतकिरणवत् शीतकिरणं तथा सुशुभ्रञ्च । हक्षाभ्यां कर्बूरवर्णाभ्यामिति बोद्धव्यम् । तदाह ईश्वरकार्त्तिकेयसम्वादे—

आज्ञाचक्रं तदूर्द्ध्वे तु शुक्लं द्विदलमण्डितम् ।
कर्बूरहक्षलसितं मनोऽधिष्ठितरञ्जितम् ॥ इति ॥

एतत्कर्णिकायां हाकिनीशक्तिस्थितिमाह तन्मध्ये इति । सा हाकिनी नाम्नी प्रसिद्धा । विद्यां पुस्तकमुद्रां वराभयरूपां तेनास्या भुजेषु षड्विधायुधदर्शनात् षड्भुजेयम् । केचित्तु विद्यामुद्रामित्येकविभक्त्यन्तं पठित्वा विद्यायै मुद्रां विद्यामुद्रां व्याख्यामुद्रामिति व्याख्यया अस्याश्चतुर्भुजत्वं वदन्ति । किन्तु नानापुस्तके पृथग्विभक्त्यन्तपाठो दृश्यते इति सुधीभिर्व्विवेच्यम् । ध्यानान्तरेण हाकिनीं विशेषयति—

चक्रस्थां शुक्लवर्णां डमरुकरयुताम् अक्षसूत्रं कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसद्रक्तषड्वक्त्रयुक्ताम् ।
हारिद्रान्ने प्रसक्तां मधुमदमुदितां शुक्लमब्जं सुरूढ़ां
देवीं देवेन्द्ररत्नाकरमधुमुदितां भावयेत् हाकिनीं ताम् ॥ इति ॥

स्पष्टमन्यत् ॥ ३२ ॥

---

डमरुजपवटीरिति । शुद्धं चित्तं यस्याः सा तथा । [ एतन्मते "कलाभ्याम्" इत्यत्र "दलाभ्याम्" इति पाठः । ]

एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धं
योनौ तत्कर्णिकायामितरशिवपदं लिङ्गचिह्नप्रकाशम् ।
विद्युन्मालाविलासं परमकुलपदं ब्रह्मसूत्रप्रबोधं
वेदानामादिवीजं स्थिरतरहृदयश्चिन्तयेत्तत् क्रमेण ॥३३॥

---

एतत्पद्मे मनःस्थितिमाह एतत्पद्मान्तराले इति। सूक्ष्मरूपमतीन्द्रियमित्यर्थः। ननु मनसोऽतीन्द्रियत्वात् तत्सत्तायां किं प्रमाणमित्याह प्रसिद्धमिति। अनादिपुरुषपरम्पराप्राप्तप्रत्यक्षकरणत्वेन प्रसिद्धम्।

तथा—

सङ्कल्पञ्च विकल्पञ्च कुर्व्वाणा तु मनो भवेत्।

इत्यादिशास्त्रप्रमाणसिद्धञ्च। अत्र मानसस्थानं वक्ष्यमाणवेदादिवीजस्योर्द्ध्वदेशे वक्ष्यमाणवचनात्।

अतएव शिवलिङ्गस्थितिमाह योनौ तत्कर्णिकायामिति कर्णिकान्तस्त्रिकोणे इतरशिवपदं इतरनामकशवरूपं वस्तु निवसतीति पूर्व्वक्रियान्वयः। लिङ्गचिह्नप्रकाशं लिङ्गरूपेण भासमानमित्यर्थः। इदं लिङ्गं शुक्लवर्णं तदाह भूतशुद्धौ—

तदन्तस्थेतरं लिङ्गं स्फटिकाभं त्रिलोचनम्॥ इति॥

लिङ्गं विशेषयति विद्युन्मालाविलासमिति।

अत्र प्रणवस्थितिमाह परमेत्यादि। कर्णिकायां वेदादिवीजं प्रणवोऽपि वसतीत्यन्वयः। वीजं विशेषयति परमकुलपदमिति। कुलं शक्तिस्तदत्र त्रिकोणाकारपदं स्थानं परमं विद्युदाकारादिना उत्कृष्टं कुलं पदं यस्य तादृशमित्यर्थः। तथा च तद्वीजं त्रिकोणमध्यवर्त्तीति पर्य्यवस्यति।

---

(३३) एतदिति। एतत्पद्मे सूक्ष्मरूपेण प्रसिद्धं मनो निवसति। तस्य पद्मकर्णिकायां या योनिः तस्यामितराख्यः शिव आस्ते तस्य स्थानमित्यर्थः। लिङ्गचिह्नेन प्रकाशो यस्य। पुनः

व्यक्तमाह—

कर्णिकायां त्रिकोणस्थमात्मानं प्रणवाकृतिम् ।
ज्वलद्दीपनिभञ्चोर्द्ध्वं नादरूपं मनोहरम् ।
विन्दुर्म्मकाररूपञ्च तदूर्द्ध्वं मानसालयः ॥ इति ॥

नन्वत्र परमकुलपदस्य प्रणवाधारत्वेनापृथक्त्वे—

मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् ।
विशुद्धमाज्ञाचक्रञ्च विन्दुर्भूयः कलापदम् ।
निबोधिका तथार्द्धेन्दुर्न्नादो नादान्त एव च ।
उन्मनी विष्णुचक्रञ्च ध्रुवमण्डलिकः शिवः ।
इत्येतत् षोड़शाधारं कथितं योगिदुर्ल्लभम् ॥

इति वचने षोड़शाधारगणनायां कलापदस्य पृथगभिधानं कथं सङ्गच्छते ? इति चेन्न । तत्कलापदं नाज्ञाचक्रस्थं किन्तु वक्ष्यमाणमहानादोर्द्ध्वं शून्यदेशे स्थितमित्येतन्महानादप्रस्तावे स्फुटीकरिष्यामः ।

ब्रह्मसूत्रप्रबोधमिति । ब्रह्मसूत्रं चित्रिणी नाड़ी तस्याः प्रबोधः प्रकाशो येनेत्यर्थः । अतएव पूर्व्वमुक्तं "प्रणवविलसिता" इति । तदिति प्रदर्शित-हाकिनीमनइतरलिङ्गवेदादिवीजरूपं तत्सर्व्वं स्थिरतरहृदयः सन् क्रमेण चिन्तयेदित्यर्थः ।

क्रमोऽत्र न ग्रन्थकारोक्तपाठक्रमः किन्तु पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वात् प्रदर्शितशाब्दक्रमो गृह्यते । एवञ्च पद्मकर्णिकायां हाकिनी शक्तिस्तदूर्द्ध्वं त्रिकोणे इतरलिङ्गं तदूर्द्ध्वं त्रिकोणे प्रणवस्तदूर्द्ध्वं मन इत्येवं क्रमेण चिन्तये-दिति ॥ ३२ ॥

---

कीदृशम् ? विद्युन्माला इव प्रकाशो यस्य तत्तथा । परमञ्च तत् कुलञ्चेति परमकुलं मूलाधारपद्मं तदेव पदं स्थानान्तरं यस्य । ब्रह्मसूत्रस्य प्रबोधो यस्मात् । तन्मनोनिवासभूतं ब्रह्मनाड़ीवर्त्मस्थि-तानां सर्व्वेषामेव तस्मादेव ज्ञानं भवतीत्यर्थः ।

ध्यानात्मा साधकेन्द्रो भवति परपुरे शीघ्रगामी मुनीन्द्रः
सर्व्वज्ञः सर्व्वदर्शी सकलहितकरः सर्व्वशास्त्रार्थवेत्ता ।
अद्वैताचारवादी विलसति परमापूर्व्वसिद्धिप्रसिद्धो
दीर्घायुः सोऽपि कर्त्ता त्रिभुवनभवने संहृतौ पालने च ॥३४॥

---

एतद्ध्यानस्य फलमाह ध्यानात्मेति । उक्तरूपेण ध्यानपरायणः साधकेन्द्रः परपुरे शीघ्रगामी भवतीति सर्व्वत्र क्रियान्वयः । मुनीन्द्रः मुनिर्ध्यान-योगादिसम्पन्नस्तदिन्द्रस्तत्श्रेष्ठः । सर्व्वज्ञः पूर्व्वोक्तरूपेण सर्व्वदर्शी शास्त्र-व्यवहाररीत्यनुरूपविवेकबुद्ध्या पूर्व्वापरदर्शी ।

अद्वैताचारवादीति—

पादोऽस्य विश्वा भूतानीति तदिदं सर्व्वं ब्रह्म ।

इत्यादिश्रुतिवाक्येन

अहं देवो न चान्योऽस्मि ब्रह्मैवास्मि न शोकभाक् ।

इत्यादिवाक्येन च ब्रह्मैवैकं सद्वस्तु तदन्यदसत् प्रपञ्चसमुदायस्तु ब्रह्मभास-तया भासते इत्यवधारणमद्वैतम् । तादृशज्ञानेन यथाचारः जीवात्मपरमात्मनो-रैक्यचिन्तनादिरूपयोगस्तद्वादी तत्कथनशीलः स जनः अद्वैताचारवादी भवतीति फलितार्थः । परमापूर्व्वसिद्धिर्म्महासिद्धिस्तया प्रसिद्धः प्राधान्येन ख्यात इत्यर्थः । सोऽपि कर्त्ता त्रिभुवनभवने संहृतौ पालने चेति प्रशंसापरम् । अथवा तादृशसाधकस्य देहान्ते परमात्मनि लयात् यः सृष्टिस्थितिप्रलयकर्त्ता स एवायं भवतीति तात्पर्य्यम् ॥ ३४ ॥

---

(३४) ध्यानात्मेति । एतद्ध्यानपरो जन एवं भवतीत्याह । ध्यानात्मा ध्याननिष्ठ इत्यर्थः । स साधकेन्द्रः परपुरे शीघ्रगामी भवति । तत्तद्दिव्यभावविषये परपुरप्रवेशनं पूर्व्वमेवोक्तं तत्तु उदासीनानामेव सम्भवतीति नान्येषाम् । अद्वैताचारं वक्तुं शीलमस्येति स तथा एव भवति । स साधकः कीदृशः ? प्रकृष्टासु आदिसिद्धिषु समर्थो भवति अतो दीर्घायुर्भवत्येव । त्रिभुवन-निवासिनां उत्पत्तौ संहृतौ पालने वा स कर्त्ता । अतो ब्रह्मविष्णुशिवात्मको भवतीत्यर्थः ।

तदन्तश्चक्रेऽस्मिन्निवसति सततं शुद्धबुद्धान्तरात्मा
प्रदीपाभज्योतिः प्रणवविरचनारूपवर्णप्रकाशः ।
तदूर्द्ध्वे चन्द्रार्द्धस्तदुपरि विलसद्बिन्दुरूपी मकार-
स्तदूर्द्ध्वे नादोऽसौ बलधवलसुधाधारसन्तानहासी ॥ ३५ ॥

तदाज्ञाचक्रे प्रणवयोगं विवक्षुरादौ प्रणवं विशेषयति तदन्तरिति । अस्यार्थः अस्मिन् चक्रे तदन्तस्तस्य पूर्व्वोक्तत्रिकोणस्य अन्तर्म्मध्ये यः प्रणव-विरचनारूपवर्णप्रकाशः प्रणवस्य विरचनारूपेण अकारोकारयोः सन्धियोगेन यस्त्रयोदशस्वरसदृशवर्णप्रकाशः सततं निवसति स शुद्धबुद्धान्तरात्मा इत्यन्वयः । तं विशेषयति प्रदीपाभज्योतिरिति । ननु तर्हि किं त्रयोदशस्वरसदृशवर्ण-मात्रं शुद्धबुद्धान्तरात्मा ? इत्याह तदूर्द्ध्वे चन्द्रार्द्धस्तदुपरि लसद्बिन्दुरूपी मकार इति । तेन तादृशवर्णोपरि अर्द्धचन्द्रबिन्दुयोगेन प्रकृतप्रणवस्वरूपः पर्य्यवस्यति ।

तदूर्द्ध्वे नादोऽसाविति प्रणवोर्द्ध्वे अवान्तरनादोऽस्तीति । स तु बलधवल-सुधाधारसन्तानहासी बलदेवस्य धवलं सुधाधारसन्तानञ्च उपहसितुं शीलं यस्येत्यर्थात् अतिशयशुक्लवर्णो नादः ।

केचित्तु तदाद्ये नादोऽसाविति पठन्ति तदाद्ये बिन्दुरूपी मकारस्याद्ये इति व्याख्यायन्ति च । तदसत् । तदुपरि विलसद्बिन्दुरूपी मकार इत्यनेन मकाराद्ये नादप्राप्तौ पुनस्तदुपादानं व्यर्थं स्यात् । परन्त्वसौ नादः प्रणव-घटकीभूतनादातिरिक्तो भिद्यमानपरबिन्दोरवयवविशेषः प्रणवोर्द्ध्वे वर्त्तते । यदि तु विशिष्टप्रणवनिरूपणे तदङ्गप्रत्यङ्गमेव वक्तुमुचितं कथं तदतिरिक्तनादो-

(३५) तदन्तरिति । तदूर्द्ध्वे अस्मिन् चक्रे सततमेव प्रणवविरचना प्रणवं विरचयति येन ओकारेण तद्रूपाक्षरप्रकाशो निवसति । कीदृशः ? शुद्धबुद्धीनां अन्तरात्मस्वरूपः । यद्वा शुद्धै-र्जनैरवगत अन्तरात्मा अस्य । तथा प्रदीपस्य आभा इव ज्योतिर्य्यस्य तस्य ओकारस्योपरि चन्द्रार्द्धः तदुपरि प्रकाशद्बिन्दुरूपो मकारः । एतेन आज्ञाख्यपद्मस्योपरि प्रणवप्रकारसिद्धिः तस्योपरि असौ नादो वक्राकृतिः । कीदृशः ? जलस्य जलकणस्य धवलामृतरश्मेरिव हासो दीप्तिर्यस्येति स तथा । [ एतन्मते "जलधवलसुधाधारसन्तानहासः" इति पाठः ] ।

इह स्थाने लीने सुमुखसदने चेतसि पुरं
निरालम्बां बद्ध्वा परमगुरुसेवासुविदिताम् ।
तदभ्यासाद्योगी पवनसुहृदां पश्यति कणान्
ततस्तन्मध्यान्तः प्रविलसितरूपानपि सदा ॥ ३६ ॥

---

ऽप्रस्तुतः प्रस्तूयते इति चेत्तर्हि तदाद्ये नादोऽसाविति पाठोऽभिमन्यते । किन्तु तस्यायमर्थः । तदाद्ये बिन्दुरूपिमकाराद्ये प्रदर्शितोऽसौ नादः बलधवलसुधाधारसन्तानहासीति पूर्व्वोक्तनादमनूद्य बलधवलेत्यादिविशेषणं विधीयते । "न तु विशिष्टस्य विधानम्" अतो न पौनरुक्तिदोषः ॥ ३५ ॥

प्रणवं निरूप्य इदानीं तद्योगं निरूपयति इह स्थाने इति । अस्यार्थः योगी जनः पुरं बद्ध्वा कुतुकेनान्तःपुरं संरुध्य तत्प्रकारेणान्तःपुररोधकावनीभूतयोनिमुद्रां बद्ध्वा इति यावत् । तेन पुःशब्देन योनिमुद्रा लक्ष्यते । तन्मुद्रां बद्ध्वा इह स्थाने आज्ञाचक्रे तदभ्यासात् तस्य प्रणवस्य पुनः पुनश्चिन्तनात् तत्र चेतसि प्रणवचतुर्दिक्षु लीने सति ततस्तदनन्तरं तन्मध्यान्तः-प्रणवाधारत्रिकोणमध्ये अन्तरन्तरीक्षे पवनसुहृदां वह्नीनां कणान् वह्निकणावज्ज्योतिःस्फुलिङ्गान् पश्यति तेषां मानसप्रत्यक्षो भवति इत्यर्थः । अत्र पुरबन्धनं विना मनसः शुद्धस्थैर्य्यं न सम्भवतीत्यतः पुरं बद्ध्वेत्युक्तम् । पुरबन्धनकारणयोनिमुद्रालक्षणमाह—

ततो गुह्ये वामपादपार्ष्णिन्तु विनिवेशयेत् ।
तस्योपरि महादेवि दक्षपार्ष्णिं निवेशयेत् ॥
ऋजुकायशिरोग्रीवङ्काकचञ्चुपुटेन च ।
आकारेण वहिर्व्वायुं जठरं परिपूरयेत् ॥

---

(३६) इह स्थाने इति । अत्यर्थसुखसदने इह स्थाने चेतसि लीने सति परमगुरुसेवासुविदितां निरालम्बां मुद्रां बद्ध्वा सर्व्वदाभ्यासात् योगी सन् पवनसुहृदां जीववह्नीनां कलां

अङ्गुलीभिर्दृढं बद्धा करणानि समाहितः।
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्ज्जनीभ्यां विलोचने॥
नासारन्ध्रे च मध्याभ्यामन्याभिर्व्वदनं दृढम्।
बद्धा मे प्राणमनसामेकत्वं तन्मनं स्मरन्।
धारयेन्मारुतं सम्यक् योगोऽयं योगिवल्लभः॥ इति॥

एवं मुद्रया वायुरोधे मनसः स्थैर्य्यमाह श्रुतिः। एवं हंसवशान्मनो विचर्य्येति इतस्ततो विषयेषु भ्रमति तत्संयमेन मनःसंयमो जायते इत्यर्थः।

अथवा पुरं खेचरीमुद्रां बद्धा इत्यर्थः। तयापि मनःस्थैर्य्यं भवति।

तदाह—

चित्तञ्चरति खे यस्मात् जिह्वा चरति खे यतः।
तेनेयं खेचरी मूद्रा सर्व्वसिद्धिनमस्कृता॥ इति॥

अत्र चित्तस्य खेचरत्वान्मनःसंयोगाभावेन विषयज्ञानरहितत्वादुन्मनी भवति। अतएवोक्तम्—

उन्मन्या सहितो योगी न योगी उन्मनीं विना॥ इति॥

प्रणवस्य ज्योतिःस्फुलिङ्गवेष्टितत्वं स्पष्टमाहान्यत्र—

तदूर्द्ध्वे प्रणवाकारमात्मानं दीपसन्निभम्।
स्फुलिङ्गज्योतिरिङ्गाभैर्व्वेष्टितं परितः शुभम्॥ इति॥

स्थाने कीदृशे? सुसुखसदने निरवच्छिन्नसुखस्य सदनं यत्र तादृशे। पुरं किम्भूतां निरालम्बां निर्गतोऽवलम्बो मनसो विषयसम्बन्धो यया तादृशीमित्यर्थः। तथा परमगुरुसेवासुविदितामिति परमः गुरुपरम्पराप्राप्तयोगाभ्यासनिपुणः तादृशगुरुः तस्य सेवाभिर्ज्ञातकृपयोपदेशेन सुविदितामिति फलितार्थः। अतएवोक्तम्—

गुरूपदेशात्तद्गम्यं नान्यथा शास्त्रकोटिभिः॥ इति॥

कणान् किम्भूतान्? प्रविलसितरूपान् प्रकृष्टरूपेण भासमानान् इति॥ ३६॥

---

पश्यति। अस्य स्थानस्य चेतोलीनत्वम् आश्चर्य्यं महः यदि भवति तदैव निरालम्बा मुद्रा भवति। तदनुभवो योगिभिरेव ज्ञायते। ततस्तन्मध्येऽम्बरे पदान् स्थूलान् रूपान् पश्यति।

ज्वलद्दीपाकारं तदनु च नवीनार्कबहुल-
प्रकाशं ज्योतिर्व्वा गगनधरणीमध्यमिलितम् ।
इह स्थाने साक्षाद्भवति भगवान् पूर्णविभवो-
ऽव्ययः साक्षी वह्नेः शशिमिहिरयोर्म्मण्डल इव ॥ ३७ ॥

---

तादृशयोगिनां वह्निकणावान्तरप्रकारदर्शनमपि भवतीत्याह ज्वलद्दीपाकारमिति । तदनु वह्निकणादर्शनमनु दर्शनान्तरं ज्योतिः पश्यतीत्यर्थः ।

ज्योतिर्व्विशेषयति ज्वलद्दीपेत्यादि गगनधरणीमध्यमिलितमिति । गगनं "तदूर्द्ध्वे शङ्खिन्या निवसति शिखरे शून्यदेशे विकाशम्" इत्यनेन प्रदर्शितशङ्खिनीनाद्यूर्द्ध्वशून्यरूपगगनं धरणी मूलाधारस्थधरामण्डलं तदुभयोर्म्मध्यमिलितं मूलाधारादिसहस्रारपर्य्यन्तव्याप्तं ज्योतिरिति विशिष्टार्थः । वेति वाशब्दः समुच्चयार्थः ।

आज्ञाचक्रे सहस्रारवत् परमशिवस्थितिमाह इह स्थाने इति । भगवान् परमशिवः इह स्थाने साक्षाद्भवति स्वयं वर्त्तते इत्यर्थः । भगवन्तं विशेषयति पूर्णविभव इत्यादि । पूर्णः स्वात्मनि परिपूर्णः सृष्टिकर्त्तृत्वाद्यशेषयोग्यतारूपविभवो यस्येत्यर्थः । अथवा विभवोऽनन्तसृष्टिप्रपञ्चसमुदायः पूर्णः सर्व्वव्यापकत्वेन स्थितः तादृशविभवो यस्मादित्यर्थः । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति" इति श्रुतेः । यद्वा विभवो विभुत्वं पूर्णः सर्व्वव्यापकत्वेन स्थितस्तादृशः विभवो यस्येत्यर्थः । यद्वा पूर्णत्वं फलानुपहितविषयितानास्पदेच्छाकत्वं तादृशो विभवो

---

(३७) ज्वलद्दीपाकारमिति । पदान् रूपान् किम्भूतान् ? ज्वलद्दीपस्येवाकारो येषां ते तथा । तत्रैव गगनधरणीवीजयोर्म्मध्ये स्थितं ज्योतिरास्ते । गगनधरणीमण्डलयोरन्तःस्थितं तद्बीजमिति यावत् । ज्योतिः कीदृशम् ? प्रातःकालीनसूर्य्यस्येव प्रकाशो यस्य तत् तथा । इह स्थाने अर्थात् चेतसि लीने श्रीभगवान् साक्षात् भवति । कीदृशः ? पूर्णः विभवः ज्ञानं यस्मात् । न व्ययति इत्यव्ययः । अतः सर्व्वेषां साक्षी एतेषां तत्स्थानाधिवासभूतत्वात् । वह्निशशिमिहिराणां मण्डलम् इव प्रकाशते अत्यर्थतेजोमयत्वात् ॥ [ एतन्मते "ज्वलद्दीपाकारान्" इति पाठः ] ।

यस्येति निगूढ़म् । आत्मातिरिक्तवस्तूनामनित्यत्वादाकाशादीनां विभुत्वं न सर्व्वकालव्यापकमिति विशेषः । अत्र परमशिवस्थितिं विशेषेण व्यनक्ति निर्व्वाणतन्त्रे—

एतत्पद्मस्योर्द्धदेशे ज्ञानपद्मं सुदुर्ल्लभम् ।
पत्रद्वयसमायुक्तं पूर्णचन्द्रस्य मण्डलम् ॥

तथा—

शम्भुवीजं हि तन्मध्ये साकारं हंसरूपकम् ।

तथा—

एवं हंसो मणिद्वीपे तस्य क्रोड़े परः शिवः ।
वामभागे सिद्धकाली सदानन्दस्वरूपिणी ॥ इति ॥

तस्य क्रोड़े हंसः इत्यस्य विन्दुद्वयरूपविसर्गमध्ये । तदाह सहस्रारमुपक्रम्य—

विन्दुद्वयन्तु तन्मध्ये विसर्गरूपमव्ययम् ।
तन्मध्ये शून्यदेशे तु शिवः परमसंज्ञकः ॥ इति ॥

एवं सहस्रारे दर्शनादत्राप्याकाङ्क्षायां तथा इति । अत्रानयोः शिवशक्त्योर्म्मायावन्धनाच्छादनेन मकारात्मरूपपरंविन्दुरूपेण स्थितिर्व्वोध्या ।

तदुक्तं आज्ञाचक्रमुपक्रम्य—

उत्कलादिमतेऽत्रैव चणकाकाररूपिणी ।
सृष्टिं करोति भूतानि अत्र स्थित्वा सनातनी ॥ इति ॥

अत्र चणकाकाररूपः परमशिवः सदा वर्त्तते । उत्कलादिमते तु अत्र स्थित्वा सृष्टिं करोतीत्यर्थः । दृष्टान्तमाह वह्नेरित्यादि । यथार्केन्दुग्निमण्डले भगवान् वर्त्तते तथात्रापीत्यर्थः । अर्कादिमण्डले भगवतोऽवस्थानं प्रसिद्धम् । यद्वा वह्निशशिमिहिरमण्डले सहस्रकमलस्यार्केन्दुग्निमण्डले यथा चणकाकारेण भगवान् वर्त्तते तद्वदत्रापीति । सहस्रदलेऽर्केन्दुग्निमण्डलानि प्रदर्शयिष्यन्ते । अतएव पीठपूजायामर्केन्दुग्निमण्डलोपरि परमात्मज्ञानात्मनोः पूजा विधीयते । परमात्मा परमशिवः ज्ञानात्मा ज्ञानशक्तिस्तदुभयाभिन्नशिवशक्त्यात्मकचणकाकारविन्दुरिति ध्येयम् ॥ ३७ ॥

इह स्थाने विष्णोरतुलपरमामोदमधुरे
समारोप्य प्राणं प्रमुदितमनाः प्राणनिधने ।
परं नित्यं देवं पुरुषमजमाद्यं त्रिजगताम्
पुराणं योगीन्द्रः प्रविशति च वेदान्तविदितम् ॥ ३८ ॥

---

आज्ञाचक्रे योगिन प्राणत्यागफलमाह इह स्थाने इति । अस्यार्थः योगीन्द्रो जनः प्राणनिधने प्राणवियोगकाले प्रमुदितमनाः आत्मानन्देन हृष्टचित्तः सन् इह आज्ञाचक्रे विष्णोर्भगवतः स्थाने उपदर्शितबिन्दुरूपे प्राणं समारोप्य अथवा तद्बिन्दौ प्राणं समारोप्य प्राणनिधने सति परं पुरुषं प्रविशतीत्यन्वितार्थः । पुरुषं विशेषयति नित्यमविनाशिनम् । देवं सृष्टिस्थितिप्रलयैः क्रीड़न्तम् । अजं जन्मरहितम् । त्रिजगतामाद्यं अनेन सर्व्वेषां पूर्व्ववर्त्तित्वात् सर्व्वकारणत्वं सूचितम् । पुराणं पुराणपुरुष इति कृत्वा यो निगद्यते स एवायमिति भावः । वेदान्तो ब्रह्मनिरूपकश्रुतिवाक्यादिः तज्ज्ञानज्ञाप्यमित्यर्थः ॥ ३८ ॥ * ॥

**तदयं विष्णोः स्थाने प्राणारोपणप्रकारः ।** प्राणवियोगकालं ज्ञात्वा ब्रह्मणि लीनो भवतीत्यानन्दितमनाः योगासनमासीनः सन् कुम्भकेन वायुं संरुध्य हृदिस्थं जीवात्मानं मूलाधारमानीय गुदमाकुञ्च्य यथोक्तविधानेन कुण्डलिनीमुत्थाप्य मूलादिब्रह्मरन्ध्रान्तं तड़िदाकारमानन्दं कुण्डलिनीमयं सूत्ररूपं नादं ध्यात्वा प्राणरूपश्वासपरमात्मकं हंसं तन्नादे विलाप्य जीवेन सह चक्रभेदक्रमेणाज्ञाचक्रमानीय तत्र स्थितायां कुण्डलिन्यां स्थूलसूक्ष्मक्रमात् पृथिव्यादिप्रपञ्चसमुदायं विलाप्य तां पुनर्जीवात्मना सह तत्र स्थितशिवशक्ति-

---

(३८) इह स्थाने इति । विष्णोरतुलपरमामोदमधुरे इह स्थाने योगी प्राणवियोगसमायोगसमये प्राणान् मनश्च समारोप्य प्रकृष्टमुदितमनाः सन् परं पुरुषमेव प्रविशति निर्व्वाणमुक्तिं प्राप्नोतीति शेषः । कीदृशं परम् ? सर्व्वेषामन्तर्भूतं नित्यं दैन्यम् । दिव्यतीति देवम् । न जायते इत्यजम् । त्रिजगतामाद्यम् । पुराणं सृष्टिस्थितिप्रलयकारणम् । वेदान्तविहितं वेदान्तमतमेतदिति । [ एतन्मते "वेदान्तनिहितम्" इति पाठः ] ।

लयस्थानं वायोस्तदुपरि च महानादरूपं शिवाद्धं
सिराकारं शान्तं वरदमभयं शुद्धबुद्धिप्रकाशम्।
यदा योगी पश्येद्गुरुचरणयुगाम्भोजसेवासुशील-
स्तदा वाचां सिद्धिः करकमलतले तस्य भूयात् सदैव ॥३९॥

मयबिन्दुनैकीभावमापाद्य तिष्ठेत्। ततो ब्रह्मरन्ध्रभेदेन देहं त्यक्त्वा ब्रह्मणि लीनो भवेदिति ॥ * ॥

तदर्थं महावाक्यार्थनिर्णयः। आज्ञाचक्रं द्विदलं शुक्लवर्णं कर्बूरवर्णहक्षद्वययुक्तपत्रम्। कर्णिकायां चक्राधिष्ठात्री हाकिनी शक्तिः शुक्लवर्णा रक्तषड्वक्त्रा त्रिनेत्रा षड्भुजा वराभयाक्षमालाकपालडमरुपुस्तकधरा शुक्लपद्मोपरि स्थिता। तदूर्द्ध्वे त्रिकोणे इतरलिङ्गः शुक्लवर्णः विद्युदाकारः। तदूर्द्ध्वत्रिकोणे प्रणवाकृतिरन्तरात्मा प्रदीपाभज्योतिः। तस्य चतुर्द्दिक्षु अन्तरीक्षे ज्योतिःस्फुलिङ्गबिम्बैर्वेष्टितः ज्वलद्दीपसदृशेन स्वतेजसा मूलादिब्रह्मरन्ध्रान्तप्रकाशकः। तदूर्द्ध्वे सूक्ष्मरूपं मनः। तदूर्द्ध्वे चन्द्रमण्डले हंसक्रोडे परमशिवः सशक्तिक इति ॥ इति षष्ठप्रकरणम् ॥ * ॥

इदानीमाज्ञाचक्रोर्द्ध्वे सहस्रदलकमलाधःस्थानवर्त्तिकारणावान्तरशरीरं निरूपयितुमिच्छन्नाह लयस्थानं वायोरिति। अस्यार्थः यदा यस्मिन् काले योगी जनः गुरुचरणयुगाम्भोजसेवासुशीलः गुरुचरणयुगाम्भोजस्य सेवया सुशोभनं दृढतरैकाग्रमनोऽभिनिवेशेन सर्व्वाङ्गसुन्दरं शीलं योगानुष्ठानरूपसद्वृत्तं यस्य तादृशः सन् तदुपरि आज्ञाचक्रोर्द्ध्वे महानादरूपं महानादस्य रूपं पश्येत् तदा तस्य योगिनः करकमलतले सदा सर्व्वस्मिन् काले वाचां सिद्धिः वाक्यसिद्धिर्भूयादेवेत्यन्वितार्थः।

(३९) लयस्थानमिति। एतत् स्थानं वायोर्व्विरामभूतम्। तदुपरि महानादरूपं योगी जनो यदा पश्येत् तदा तस्य वाक्सिद्धिरपि करपद्मतले सदैव भूयात्। कीदृशम्? शिवो हकारः तदाकारं शिवदेव्योरर्द्धाङ्गस्वरूपं यस्य हरगौर्य्यात्मकत्वात्। शान्तं सौम्यमूर्त्तिम्। वरान् ददाति अभयमपि। सुबुद्धीनां प्रकाशो यस्मात्। योगी कीदृशः? गुरुचरणसेवासुशील इति गुरुचरणसेवातदुपदेश इत्यर्थः।

नादं विशेषयति लयस्थानं वायोरिति। अत्र महानादे वायोर्लयः यस्मादुत्पत्तिः तत्र लयनियमात्। यद्यपि भूतशुद्ध्यादौ स्पर्शतत्त्वे वायोर्लयस्तस्य च व्योम्नि लयो दृश्यते तथापि कदाचित् नादेऽपि वायोर्लयो भवतीति। अत्र

"पृथिवीकाराद्रसवती रसादजायत ककारात् सर्व्वाणि जलानि तीर्थानि रेफाद्वह्नितत्त्वं नादाद्वायुः सर्व्वप्राणमयः विन्दोर्गगनं सर्व्वशून्यं शब्दमयं तेभ्यः पञ्चविंशतिगुणमयतत्त्वं सर्व्वमिदं विश्वं ब्रह्माण्डं कालिकामयम्"

इति श्रुतिवाक्येन कालीमन्त्रवर्णस्य सूक्ष्मे संहरणकाले नादे वायोर्लयो भवतीति ध्येयम्। शिवार्द्धमिति। शिवस्यार्द्धनारीश्वरत्वात् तदर्द्धं शक्तिस्तद्रूपं नादमित्यर्थः। सिराकारमिति दन्त्यादिसिरोलाङ्गलस्तदाकारमित्यर्थः।

तदूर्द्ध्वे तु महानादो लाङ्गलाकृतिरुज्ज्वलः।

इति कार्त्तिकेयेश्वरसम्वादवाक्यात्। यद्यपि "कृषिको लाङ्गलं हलं गोदारणञ्चसीरश्च" इत्यमरकोषे लाङ्गलवाचकसीरशब्दस्य चतुर्थस्वरयोगित्वं तथाप्यत्र वचनान्तरैकवाक्यतानुरोधेन तृतीयस्वरयुक्तसिरः पदेनापि लाङ्गलः प्रतीयते इति। अथवा शिवाकारमिति तेन शिवशक्तिमयोऽयं नादः।

तदुक्तं प्रपञ्चसारे—

नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी।

शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता॥ इति॥

अतएव "तस्या एव शक्तेर्नादविन्दूपृषत्युपयोग्यरूपौ" इति राघवभट्टेनाप्युक्तम्।

अन्यत्र—

सातत्यसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्तथा।

विचिकीर्षुर्घनीभूय क्वचिदभ्येति विन्दुताम्॥ इति॥

तथा श्रीमदाचार्य्यवाक्यम्। "नाद एव घनीभूतः क्वचिदभ्येति विन्दुताम्" इति। अत्र सकलवचनपर्य्यालोचनया शक्तिरेव नादविन्दुरूपेणाविर्भूता सुवर्णकुण्डलमिव। नादविन्दुः पुनरेकाकारैव इति निष्कर्षः। वरदातारमित्यर्थः॥३९॥

तदूर्द्ध्वं शङ्खिन्या निवसति शिखरे शून्यदेशे प्रकाशं
विसर्गाधः पद्मं दशशतदलं पूर्णचन्द्रातिशुभ्रम्।
अधोवक्त्रं कान्तं तरुणरविकलाकान्तिकिञ्जल्कपुञ्जं
ललाटाद्यैर्व्वर्णैः प्रविलसितवपुः केवलानन्दरूपम् ॥४०॥

---

अथ समाधिरूपयोगानुशीलनसाधकानां समाधिकालात् प्रागेवं विचिन्त्यातिप्रयत्नः स्थूलसूक्ष्मक्रमात् सर्व्वं चिदात्मनि विलापयेदित्याचार्य्यवचनेन समाधेः पूर्व्वं स्थूलसूक्ष्मरूपसृष्टिप्रपञ्चसमुदायचिन्तनविधानात् तज्ज्ञानस्यावश्यकत्वादत्र वदन्ति। तत्र तावत् पृथिव्यादि पञ्च स्थूलरूपाणि मूलादिविशुद्धान्तचक्रे उक्तानि तदाश्रितत्वात् मूलाधारे भूमण्डले पादघ्राणेन्द्रियगन्धतत्त्वेति त्रिः। जलमण्डले पाणिरसनेन्द्रियरसतत्त्वेति त्रिः। वह्निमण्डले पायुचक्षुरिन्द्रियरूपतत्त्वेति त्रिः। वायुमण्डले उपस्थत्वगिन्द्रियस्पर्शतत्त्वेति त्रिः। नभोमण्डले वाक्श्रोत्रेन्द्रियशब्दतत्त्वेति त्रिरिति समुदायेन पञ्चदशतत्त्वानि वर्त्तन्ते। पृथिव्यादिना मिलित्वा विंशतितत्त्वानि स्थूलानि बोद्धव्यानि। इदानीं सूक्ष्मरूपाणि विधीयन्ते। तत्राज्ञाचक्रे सूक्ष्मरूपं मनः स्वयं प्रदर्शितम्। अपराण्याह कङ्कालमालिनीतन्त्रे आज्ञाचक्रमुपक्रम्य—

मनश्चात्र सदा भाति हाकिनीशक्तिरञ्जितम्।
बुद्धिप्रकृत्यहङ्कारालङ्कृतं तैजसं परम् ॥ इति ॥

अत्र बुद्धिप्रकृत्यहङ्कारात्मकसूक्ष्मरूपत्रयाणां स्थितिः प्रतीयते। तत्राहङ्कारस्य न पाठक्रमात् स्थितिः मूलाधारादि सर्व्वत्र पृथिव्यादिजनकस्य तत्तद्विलयाधारस्य च जन्यविलाप्ययोरधःस्थितिदर्शनात् पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वाच्चात्रापि तथा स्थितिः कल्प्यते। तेन "अहङ्कारे हरेद्व्योम सशब्दं

---

(४०) तदूर्द्ध्वं इति। तस्य महानादस्य ऊर्द्ध्वं महाशङ्खिन्याश्च शिखरसमदेशे शून्यनिरालम्बे विसर्गस्याधः प्रकाशरूपं सहस्रदलपद्मं निवसति। अत्यर्थपूर्णचन्द्र इव शुभ्रं अधोवक्त्रं कान्तं तरुणरविकला इव कान्तं किञ्जल्कपुञ्जं यस्य। ललाटाद्यैर्ललाटादिविन्यस्तैरकारादिपञ्चाशद्वर्णैर्व्विंशतिप्राकारेण परिलसिततनुः केवलानन्दस्वरूपमिति।

तन्महत्यपि” इति वचनात् व्योम्नो विलयार्थं तद्विलयाधिकरणस्याहङ्कारस्य प्रथमोपस्थितं तदादावहङ्कारस्तदूर्द्ध्वे बुद्धिप्रकृत्योः स्थितिः । एतेषां जन्यजनकभावमाह सारदायाम्—

मूलभूतात्ततोऽव्यक्तात् विकृतात् परवस्तुनः ।
आसीत् किल महत्तत्त्वं गुणान्तःकरणात्मकम् ।
अभूत्तस्मादहङ्कारस्त्रिविधः सृष्टिभेदतः ॥ इति ॥

विकृतादिति इदं परवस्तुनः प्रतिविम्बत्वेन विकृतिरूपं महत्तत्त्वादीनां प्रकृतित्वात् प्रकृतिनामकञ्च । अतएवोक्तम्—

प्रकृतिः परमा शक्तिर्व्विकृतिः प्रतिविम्बता ॥ इति ॥

तथा परंब्रह्मात्मप्रकृतिप्रतिविम्बस्वरूपिणीति प्रागुपदर्शितम् । सारदावचने महत्तत्त्वमिति । यदेव महत्तत्त्वं सैव बुद्धिः । तदाह ईशानशिवेन—

बोद्धव्यलक्षणा सैव प्रकृतिः शक्तिजृम्भिता ।
बुद्धितत्त्वं भवेद्व्यक्तं सात्त्विकं गुणमाश्रिता ।
सैव बुद्धिर्म्महन्नाम तत्त्वं सांख्ये प्रगीयते ॥ इति ॥

महत्तत्त्वन्तु गुणान्तःकरणात्मकम् । गुणाः सत्त्वरजस्तमोरूपाः । अन्तःकरणमाह सारदायाम् “अन्तःकरणमात्मनः मनोबुद्धिरहङ्कारश्चित्तञ्च परिकीर्त्तितम्” इति । एतत्समुदायात्मकं महत्तत्त्वम् । ननु मनसो महत्तत्त्वान्तर्गतत्वे तदन्तश्चक्रेऽस्मिन् प्रविलसति मनः सूक्ष्मरूपमित्यनेन पृथगभिधानं कथं सङ्गच्छते इति चेन्न तन्मनो न महत्तत्त्वान्तर्गतं किन्तु तदहङ्कारजन्यमतिरिक्तम् । तदाह—

“यतोऽपरं मनस्तत्त्वं ससङ्कल्पविकल्पकम् ।
तैजसादेव तज्जातम्” इति राघवभट्टः ।

एवञ्चाज्ञाचक्रस्थमनःपर्य्यन्तानां क्रमेण स्थितेर्व्विहितत्वात् तदूर्द्ध्वेऽहङ्कारादीनां स्थितिर्बोध्या । ततश्चाज्ञाचक्रे हाकिनी इतरलिङ्गप्रणवमनोऽहङ्कारबुद्धिप्रकृतीनामव्यवहितोर्द्ध्वोर्द्ध्वक्रमेण स्थितिनिरूपणात् स्थानविशेषानभिहितस्य पूर्व्वदर्शितचन्द्रमण्डलस्य तेषामूर्द्ध्वे स्थितिरिति । ननु तेषामधः

कथं न स्थीयते इति चेन्न । "इन्दुर्ललाटदेशे च तदूर्द्ध्वे बोधिनी स्वयम्" इति सम्मोहनतन्त्रवचनेन वच्यमाणाज्ञाचक्रोर्द्ध्ववर्त्तिन्योः समनियतयोरिन्दुबोधिन्यो-रधोभागे स्थितिबोधनात् तयोरव्यवधानाय सर्व्वोर्द्ध्वे एव तस्य स्थितिरिति ।

अथाज्ञाचक्रोर्द्ध्वे कारणरूपमाह सम्मोहनतन्त्रे—

इन्दुर्ललाटदेशे च तदूर्द्ध्वे बोधिनी स्वयम् ।
तदूर्द्ध्वे भाति नादोऽसावर्द्धचन्द्राकृतिः परः ॥
तदूर्द्ध्वे च महानादो लाङ्गलाकृतिरुज्ज्वलः ।
तदूर्द्ध्वे च कला प्रोक्ता आञ्जीति योगिवल्लभा ।
उन्मनी तु तदूर्द्ध्वे च यद्‌गत्वा न निवर्त्तते ॥ इति ॥

तदूर्द्ध्वे बोधिनीत्यत्र तदूर्द्ध्वे ललाटोर्द्ध्वे आज्ञाचक्रोर्द्ध्वे इति यावत् । बोधिन्यधःस्थले विन्दुस्थितिमाह भूतशुद्धितन्त्रे—

विन्दुर्म्मात्रार्द्धतो देवि तदूर्द्ध्वं नादसंज्ञितम् ।
लयस्थानं तथा वायोर्म्महानादं तदूर्द्ध्वतः ॥ इति ॥

मात्रार्द्धा शक्तिः ।

बालसूर्य्यप्रतीकाशमासीद्विन्दुमदक्षरम् ।
तदूर्द्ध्वे चार्द्धमात्रा तु गान्धाररागमाश्रिता ॥

इति बृहत्त्रिविक्रमसंहितावचनेनार्द्धमात्रायाः शक्तिवाचकत्वप्रतीतेः । अत्र द्वयोर्व्वचनयोरेकवाक्यतया यार्द्धमात्रा सैव बोधिनीति बोध्यम् । विन्दु-बोधिनीनादेति त्रयं विन्दुमयपरशक्तेः रूपविशेषः ।

तदाह सारदायाम्—

सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद्विन्दुसमुद्भवः ॥
परशक्तिमयः साक्षात्त्रिधासौ भिद्यते पुनः ।
विन्दुर्नादो वीजमिति तस्य भेदाः समीरिताः ॥
विन्दुर्नादात्मको वीजं शक्तिर्नादस्तयोर्म्मिथः ।
समवायः समाख्यातः सर्व्वागमविशारदैः ॥ इति ।

परशक्तिमयः परः शिवस्तेन शिवशक्तिमयो विन्दुः। अयं ललाटोर्द्धे स्थितो विन्दुर्नादात्मकः शिवात्मकः।

वीजं शक्तिर्बोधिनीरूपमित्यर्थः। नादस्तयोः समवायः सम्बन्धः चोभ्य-चोभकरूपस्तेनायं क्रियाशक्तिरूपः एतत्त्रयोर्द्धे महानादः पूर्व्वोपदर्शितः।

तदूर्द्धे च कला प्रोक्ता इति। कला पंक्तिः। आञ्जीति तिर्य्यक् रेखारूप-मालाकारा इत्यर्थः। इयं शक्तिः सृष्ट्यादौ आविर्भूता। तदुक्तं पञ्चरात्रे—

एवमालोक्य सर्गादौ सच्चिदानन्दरूपिणीम्।
समस्ततत्त्वसंघातां सृष्ट्यधिष्ठातृरूपिणीम्।
व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान्॥ इति॥

अन्यत्र—

शिवशक्तिसमायोगादव्यक्तात् परमेश्वरात्।
आद्या भगवती देवी सैव त्रिपुरसुन्दरी।
आसीच्छक्तिस्ततो नादो नादाद्विन्दुसमुद्भवः॥ इति॥

उन्मनी तु तदूर्द्धे चेति। तल्लक्षणमाह—

यत्र गत्वा तु मनसो मनस्त्वं नैव विद्यते।
उन्मनी सा समाख्याता सर्व्वतन्त्रेषु गोपिता॥ इति॥

ततश्च मनोवृत्तिमद्विषयावलम्बनचेष्टाकालीनविषयावलम्बनसामान्याभाव-सम्पादनं तत्त्वमुन्मनीत्वमिति। सा च द्विविधा सहस्राराधारा निर्वाण-कुलारूपा एतत्स्थानस्थिता वर्णावलीरूपा।

तथा च कङ्कालमालिनीतन्त्रे—

सहस्रारकर्णिकायां चन्द्रमण्डलमध्यगा।
सर्व्वसङ्कल्परहिता कला सप्तदशी भवेत्।
उन्मनी नाम तस्या हि भवपाशनिकृन्तनी॥ इति॥

तथा—

उन्मनीञ्च मालावर्णं स्मरणात् मोक्षदायिनी॥ इति।

मालावर्णं वर्णावलीरूपमित्यर्थः।

उन्मन्यधः समनीमाह भूतशुद्धौ—

तती हि व्यापिका शक्तिराज्ञीति यां विदुर्ज्जनाः।
समनीमूर्द्धतस्तस्या उन्मनीन्तु तदूर्द्धतः॥ इति॥

इदमपि परशक्तेरवान्तररूपम्। ततश्चाज्ञाचक्रोर्द्धे द्वितीयविन्दुः शिवस्वरूपः। तदूर्द्धे अर्द्धमात्राकारा बोधिनीशक्तिस्तदूर्द्धे शिवशक्तिसमवायरूपाऽर्द्धचन्द्राकृतिर्नादस्तदूर्द्धे लाङ्गलाकृतिर्म्महानादस्तदूर्द्धे आज्ञीरूपा व्यापिकाशक्तिः तदूर्द्धे समनी तदूर्द्धे उन्मनीति क्रमेण सप्तकारणरूपाणि वर्त्तन्ते।

अलमतिविस्तरेण प्रकृतमनुसरामः। सहस्रदलपद्मं निरूपयन्नाह तदूर्द्ध इति दशभिः। तदूर्द्धे प्रागुपदर्शितसर्व्वेषामूर्द्धे पूर्व्वोपदर्शितशङ्खिनीनाड्याः शिखरे मस्तके शून्यदेशे नाड्यनावृतस्थाने तेन सुषुम्नाया अपि ऊर्द्धे इति सूचितम्। विसर्गस्याधः दशशतदलं सहस्रदलं पद्मं निवसति इत्यन्वयः।

विसर्गन्तु ब्रह्मरन्ध्रस्योर्द्धभागे—

तस्मिन् रन्ध्रे विसर्गञ्च नित्यानन्दं निरञ्जनम्॥

इत्यादि वक्ष्यमाणवचनात्।

पद्मं विशेषयति पूर्णचन्द्रेत्यादि। ल-काराद्यैर्व्वर्णैः प्रविलसितवपुरिति। अत्र ल-कारग्रहणं न विलोमेन वर्णचिन्तनार्थं किन्तु ल-कारग्रहणं क्ष-कारपरित्यागार्थम्। तत्त्यागवीजं हि वर्णानां सहस्रदले स्थितिरावर्त्तनेनैव घटते। एवञ्च क्ष-कारसहितैकपञ्चाशद्वर्णानां विंशत्यावर्त्तने विंशत्यधिकसहस्रसंख्या भवन्ति। ऊनविंशत्यावर्त्तने तु एकत्रिंशन्न्यूनसहस्रसंख्या भवन्ति। अतः क्ष-कारपरित्यागेन तत् समाधीयते। तेन अ-कारादिल-कारान्तपञ्चाशद्वर्णा अनुलोमेन विंशत्यावर्त्तनेन सहस्रदले चिन्तनीया इति ध्येयम्। अनुलोमेन वर्णचिन्तनं व्यक्तमाह कङ्कालमालिनीतन्त्रे—

सहस्रारं महापद्मं शुक्लवर्णमधोमुखम्।
अ-कारादि क्ष-कारान्तैः स्फुरद्वर्णैर्व्विराजितम्॥ इति॥

अत्र क्ष-कारान्तैरित्यत्रान्तशब्दस्यावसानार्थकत्वात् क्ष-कारोऽन्तेऽवसाने यस्येति बहुव्रीहिणा क्ष-कारं विहाय ल-कारान्तपञ्चाशद्वर्णयोगः। अथवा ल कारा-

समास्ते तस्यान्तः शशपरिरहितः शुद्धसम्पूर्णचन्द्रः
स्फुरज्ज्योत्स्नाजालः परमरसचयस्निग्धसन्तानहासी ।
त्रिकोणं तस्यान्तः स्फुरति च सततं विद्युदाकाररूपं
तदन्तःशून्यं तत् सकलसुरगणैः सेवितं चातिगुप्तम् ॥ ४१ ॥

---

द्यैरिति लकार-क्षकारान्तपञ्चाशद्वर्णानामकथादित्रिरेखावद्वामावर्त्तेन यथायोग्यावर्त्तनेन विन्यासः । कङ्कालमालिनीवचनन्तु दक्षिणावर्त्तेन वर्णविन्यासविधायकम् इति वचनद्वयोरविरोधः । अत्र पञ्चाशद्वर्णानां रूपविशेषानभिधानात्तद्वर्णमय्या मातृकायाः शुक्लवर्णत्वदर्शनात्तेऽप्यत्र शुक्लत्वेनैव चिन्तनीया इति ध्येयम् । ललाटाद्यैर्व्वर्णैरिति पाठे तु ललाटशब्देन मातृकान्यासोक्तललाटवर्णः अकारस्तदाद्यैर्व्वर्णैरित्यर्थः । एतत्पक्षे लकारं विहाय अकारादिक्षकारान्तं पञ्चाशद्वर्णयोगो बोध्यः । सर्व्वत्र पञ्चाशद्वर्णग्रहणे अन्त्यलकारत्यागदर्शनात् ।

अत्र केचित् प्रविलसिततनुरिति पठन्ति । तत्र "वा पुंसि पद्मम्" इति दर्शनात् पुंसि विशिष्टस्य पद्ममित्यस्य विशेषणतया तनुरित्यस्यापि पुंस्त्वमिति व्याख्यायन्ति च । तन्न एतत्श्लोकस्थनिवसतिक्रियायाः कर्त्तृत्वेन पद्ममिति विन्दन्तनिर्द्देशात् क्लीवलिङ्गप्रयोग एव प्रतीयते न तु पुंलिङ्गप्रयोगस्तथात्वे विसर्गान्तो भवितुमर्हति अतस्तद्विशेषणस्य तनुशब्दस्य क्लीवत्वमवश्यं वाच्यं तथात्वे विन्दन्तता न भवति निर्व्विन्दुत्वे छन्दःपातस्तस्माद्वपुरित्येव पाठः । स्पष्टमन्यत् ॥ ४० ॥

सहस्रदलकमलकर्णिकायां चन्द्रमण्डलस्थितिमाह समास्ते इति ।

---

(४१) समास्ते इति । तस्य पद्मस्यान्तर्मध्ये शशरहितः अत्यर्थदीप्तिमान् सम्पूर्णचन्द्रः समास्ते । कीदृशः ? स्फुरन्ति ज्योत्स्नाजालानि यस्य स तथा । परमरसचयेन शिवसम्बन्धाय

तस्यान्तः तत्र पद्मे अन्तर्म्मध्ये शुद्धः निर्म्मलोदयविशिष्टः। चन्द्रं विशेषयति स्फुरदित्यादि परमरसचयस्निग्धसन्तानहासी इति। स्निग्धः आर्द्रसदृशभावस्तस्य सन्तानो विस्तारो यत्र इत्यर्थः। ततश्च परमामृतरसचयेन उत्तापहीनतया स्निग्धसन्तानयुक्तो हासवदानन्दमयकिरणविशिष्ट इत्यर्थः। अथ चन्द्रमण्डलस्याध ऊर्द्ध्वे अन्तरात्मादीनां स्थितिमाह कङ्कालमालिनीतन्त्रे सहस्रारमुपक्रम्य—

तत्कर्णिकायां देवेशि अन्तरात्मा ततो गुरुः।
सूर्य्यस्य मण्डलञ्चैव चन्द्रमण्डलमेव च॥
ततो वायुर्म्महानामा ब्रह्मरन्ध्रं ततः स्मृतम्।
तस्मिन् रन्ध्रे विसर्गञ्च नित्यानन्दं निरञ्जनम्।
तदूर्द्ध्वे शङ्खिनी देवी सृष्टिस्थित्यन्तकारिणी॥ इति॥

तत्रान्तः चन्द्रमण्डलमध्ये सततं निरन्तरं विद्युदाकाररूपं त्रिकोणं स्फुरतीति। तदन्तःशून्यमिति। अन्तर्म्मध्ये शून्यं यस्य तदन्तःशून्यं परं विन्दुशरीरं तस्मिन् त्रिकोणे अन्तःशून्यं तदन्तःशून्यं त्रिकोणमध्यवर्त्ति परंविन्दुरूपं शून्यं स्फुरतीति क्रियान्वयः। यद्वा तदन्तस्त्रिकोणमध्ये शून्ये परं विन्दुरूपं स्फुरति। अतएवोक्तं तोड़लतन्त्रे षष्ठोल्लासे—

निराकारं परं ज्योतिर्व्विन्दुश्चाव्ययसंज्ञकम्।
विन्दुशब्देन शून्यं स्यात् तथा च गुणसूचकम्॥ इति।

अत्र "आहारनिर्हारविहारयोगाः सुसंवृताः धर्म्मविदा तु कार्य्याः" इति वचनात् योगस्य गोपनेनानुष्ठानविधानात् तदन्तःशून्यमतिगुप्तं यथा स्यात्तथा सकलसुरगणैः सेवितम् आराधितमित्यर्थः॥ ४१॥

---

परमामृतसमूहेन अत्यर्थस्निग्धहासो दीप्तिर्यस्य तस्य चन्द्रस्य मध्ये त्रिकोणं सर्व्वदैव स्फुरति विद्युदाकार इव रूपं यस्य त्रिकोणान्तर्म्मध्ये तत् शून्याकारं विलसति। सकलसुरगणैः सेवितम्। शून्यत्वादतिगुह्यम्।

सुगुप्तं तद्यत्नादतिशयपरमामोदसन्तानराशेः
परं कन्दं सूक्ष्मं सकलशशिकलाशुद्धरूपप्रकाशम् ।
इह स्थाने देवः परमशिवसमाख्यानसिद्धः प्रसिद्धः
स्वरूपी सर्व्वात्मा रसविरसमितो ज्ञानमोहान्धहंसः ॥४२॥

---

सुगुप्तमिति । अस्यायमर्थः वक्ष्यमाणकेशाग्रकोटिभागैकरूपत्वादतिगुप्तं तत् शून्यं यत्नात् चिरनिरन्तरध्यानाद्यनुष्ठानात् सकलशशिकलाशुद्धरूपप्रकाशं कला निर्व्वाणकला तया सह वर्त्तमाना या शशिनश्चन्द्रस्य षोड़शी कला तया निर्म्मलरूपप्रकाशो यस्य तदित्यर्थः । तथा चातिसूक्ष्ममपि त्रिकोणान्तर्व्वर्त्त्यमाकलानिर्व्वाणकलासहितपरंविन्दुरूपान्तःशून्यं ध्यानेन प्रकाशितं भवतीति भावः । परमामोदसन्तानराशेर्म्मोक्षस्य परं कन्दं प्रधानमूलमित्यर्थः । सुगुप्तमित्यत्र सुगोप्यमिति पाठे यत्नादित्यस्य उभयत्रान्वय इति ध्येयम् ।

केचित्तु त्रिकोणान्तःशून्यं शून्यस्थानं तत्तु कीदृशम् ? सकलशशिकलाशुद्धरूपप्रकाशम् । शशिनश्चन्द्रस्य सकलकलाः समस्तकलाः षोड़शकलाः तत् शुद्धं शुक्लं यद्रूपं तदेव प्रकाशो यस्य तादृशपूर्णचन्द्रप्रकाशमित्यर्थः इति व्याख्यायन्ति तच्चिन्त्यम् । तत्त्रिकोणस्य पूर्णचन्द्रमण्डलमध्यवर्त्तित्वकथनेनैव त्रिकोणमध्यस्थानस्य पूर्णचन्द्रतुल्यप्रकाशप्राप्तौ पुनस्तत्कथनं व्यर्थं स्यात् । किञ्च सकलसुरगणैः सेवितमित्यनेन शून्यस्थानस्य सेवनं न युज्यते किन्तु त्रिकोणान्तर्व्विन्दोरेव सेव्यत्वमिति । यदि तु तत् शून्यस्थानस्य परं विन्दोरधिष्ठानात् सेव्यत्वमित्युच्यते तदा तु तत्शून्यस्थानस्य परं विन्दोरधि-

---

(४२) सुगुप्तमिति । सुगोप्यं तत् शून्याकारशिवलिङ्गं यत्नात् गोप्यं गोपनीयं कस्मैचित् यावत्तावन्न कथनीयम् । कीदृशम् ? अतिशयपरमामोदसन्तानजनकामृतराशेः प्रकृष्टमूलं तस्मादेव परमामृतं क्षरति । सूक्ष्मम् अलक्ष्यं शशिनः सकलकलैकांशरूपं प्रकाशो यस्य । इह स्थान एव परमशिवत्वेन सिद्धः सर्व्वैर्व्विदितः प्रसिद्धः योगिनां हृदये प्रकाशनस्वरूपी शून्याकारः सर्व्वेषाम् आत्मा रसविरसमितः परमरसेनाच्छादितः अज्ञानेन यो मोहान्धकारः तत्र हंसः सूर्य्यसदृशः ।

बन्धकविषयचिन्तादित्यागेन स्वस्वस्थाने स्थिरतरं भावयामीति प्रत्येकं क्रियान्वयः ।

हुतभुक्शिखात्रयमिति । हुतभुक्शिखादित्रयं हुतभुक्शिखात्रयम् । शाकपार्थिवादित्वात् मध्यपदलोपे तत्पदसिद्धिः । हुतभुक् वह्निस्तच्छिखा वह्निविन्दोरङ्कुरभूतदक्षिणादीशपर्य्यन्तगता रामा रेखा । आदिना ईशान-कोणस्थचन्द्रविन्दोरङ्कुरभूतेशानादिमरुत्कोणपर्य्यन्तगता ज्येष्ठा रेखा । मरु-त्कोणस्थसूर्य्यविन्दोरङ्कुरभूततदादिवह्निविन्दुसङ्गता रौद्री रेखा । एवं त्रिविन्दु-त्रिरेखामिलितत्रिकोणं कामकलारूपम् ।

तदुक्तं बृहच्छ्रीक्रमे—

विन्दोरङ्कुरभावेन वर्णावयवरूपिणी ।
विन्द्वग्रे कुटिलीभूता यस्मादीशानमागता ॥
मनोरमा शक्तिरूपा सा शिखा चित्कला परा ।
शक्तीशानगता रेखा प्रत्यगाग्नेयमात्रगा ॥
ज्येष्ठा सा परमेशानी त्रिपुरा परमेश्वरि ।
व्यक्तीभूय पुनर्व्वामे प्रथमाङ्कुरमागता ।
इच्छया नादसंलग्ना रौद्री शृङ्गाटमागता ॥ इति ॥

सा शिखेति आग्नेयमात्रगा वह्निसम्बन्धिनी मात्रा सा शिखा वह्नि-शिखेत्यर्थः ।

माहेश्वरीसंहितायाम्—

सूर्य्यश्चन्द्रस्तथा वह्निरिति विन्दुत्रयं भवेत् ।
ब्रह्मा विष्णुस्तथा शम्भुरिति रेखात्रयं मतम् ॥ इति ॥

एतत्त्रिकोणमध्ये गुरुस्थितिं स्पष्टमाह प्रेमयोगतरङ्गिणीधृतवचनम् सहस्रदलमुपक्रम्य—

तन्मध्ये तु त्रिकोणन्तु विद्युदाकारमुत्तमम् ।
विन्दुद्वयञ्च तन्मध्ये विसर्गरूपमव्ययम् ।
तन्मध्ये शून्यदेशे च शिवः परमसंज्ञकः ॥ इति ॥

अतएव शङ्कराचार्य्येणापि आनन्दलहर्य्याम् इदं सुव्यक्तमभिहितम् । श्रीनाथस्य विसर्गारूढ़त्वात् इति ललितारहस्यकारेणोक्तञ्च । विसर्गस्तु त्रिकोणोर्द्ध्ववर्त्तिचन्द्रसूर्य्यरूपविन्दुद्वयमिति ।

आदिहंसयोर्युगमित्यत्रादिनान्तरात्मसंज्ञकपरमहंस एव गृह्यते न तु दीपकलिकाकारजीवात्महंसः । अयं हंसः प्रकृतिपुरुषरूपः ।

तदुक्तमागमकल्पद्रुमे पञ्चशाखायाम्—

हङ्कारो विन्दुरित्युक्तो विसर्गः स इति स्मृतः ।
विन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृतः ॥
पुंप्रकृत्यात्मको हंसस्तदात्मकमिदं जगत् ॥ इति ॥

केचित्तु अस्य मणिपीठस्योर्द्ध्वम् आदिहंसयोर्युगं व्यामृषामीति व्याख्यायन्ति । तन्मन्दं पूर्व्वोक्तकङ्कालमालिनीवचनबोधितहंसोर्द्ध्वं नादविन्दुमध्यस्थमणिपीठे नादविन्दोरधःस्थहंसस्थितेः सर्व्वत्रासम्भवात् । एतेन हुतभुक्शिखासखमिति केषाञ्चित् कल्पितपाठो निरस्तः । तथात्वे ऊर्द्ध्वमस्येत्यस्य वैयर्थ्यापत्तेः । यद्वा अस्य मणिपीठमण्डलस्योर्द्ध्वं आदिहंसयोर्युगं व्यामृषामि । कङ्कालमालिनीवचने नादविन्दुमध्यस्थितमणिपीठाधःस्थले हंसस्थितिः प्राप्ता । अत्र मणिपीठोर्द्ध्वस्थितिकथने महान् विरोधः अतस्तयोरविवादाय हंसं विशेषयति हुतभुक्शिखात्रयमिति । ततश्चाधःस्थले हंस इत्यानुपूर्व्विकस्य स्थितिः । ऊर्द्ध्वे पूर्व्वोक्तत्रिकोणाकारकामकलारूपेण परिणतस्य तस्य स्थितिरित्यविरोधः कामकलाया हंसरचितमूर्त्तिकत्वात् ।

पुनर्व्विशेषयति विश्वघस्मरमहोच्चिदोत्कटमिति ।

ङभचेल्वघसौ चाथ घसिङच्चरणे व्युसक् ।

तथाच—

देङ्याचे चिदिह्लादे दीप्तौ च्युदकनुदिच्छिदि वा ।

इति धातुपाठात् घसधातोर्भक्षणार्थत्वम् । चिदोर्दीप्त्यर्थत्वम् । ततश्च

तत्र नाथचरणारविन्दयोः
कुङ्कुमासवपरीमरन्दयोः ।
द्वन्द्वमिन्दुमकरन्दशीतलं
मानसं स्मरति मङ्गलास्पदम् ॥ ५ ॥

---

विश्वानां घस्मरा भक्षिका अर्थात् संहारिका या महोच्चित् महाप्रकाशस्तया उत्कटं दूरतरं सर्व्वाधिकबलवदित्यर्थः ॥ ४ ॥

श्रीनाथचरणारविन्दचिन्तनाधिकरणपीठं निरूप्येदानीं तद्ध्यानयोगं सूचयंस्तौति तत्रेति द्वाभ्याम् । अस्यार्थः तत्र मणिपीठस्थत्रिकोणमध्ये नाथचरणारविन्दयोर्द्वन्द्वं मानसं स्मरति ध्यायते इत्यन्वयः ।

चरणद्वन्द्वं विशेषयति कुङ्कुमासवपरीमरन्दयोरिति ।

वीप्सेत्थम्भावचिह्नेषु तेषु भागे परिप्रती ॥

इति वोपदेवीयात् परेर्भागार्थत्वम् । ततश्च कुङ्कुमासवानां लाक्षा-रसाभपरमामृतानां यः परिभागः स एव मरन्दो मकरन्दो ययोस्तादृशयो-रित्यर्थः । "झरीमरन्दयोः" इति पाठे झरी झरणं निःसरणमिति यावत् । ततश्च "कृदभिहितभावो द्रव्यवत् प्रकाशते" इत्युक्तेः कुङ्कुमासवानां झरी अर्थात् झरणाश्रयकुङ्कुमासवो मरन्दो ययोरित्यर्थः ।

द्वन्द्वं कीदृशम् ? इन्दुमकरन्दशीतलम् इन्दोश्चन्द्रस्य यो मकरन्दः अमृत-किरणरूपः तद्वत् शीतलम् । यथा चन्द्रामृतकिरणेन उत्तापनिवृत्तिस्तथा पदद्वन्द्वसेवनेन दुःखतापशान्तिरिति भावः ।

मङ्गलास्पदम् अभिप्रेतार्थसिद्धिस्थानम् । तच्चरणस्थाने मनोऽभिनिवेशे सर्व्वाभीष्टसिद्धिरिति तात्पर्य्यम् ॥ ५ ॥

निशक्तमणिपादुकानियमिताघकोलाहलं
स्फुरत्किशलयारुणं नखसमुल्लसच्चन्द्रकम् ।
परामृतसरोवरोदितसरोजसद्रोचिषं
भजामि शिरसि स्थितं गुरुपदारविन्दद्वयम् ॥ ६ ॥

---

निशक्तेति । अस्यार्थः अहं शिरसि स्थितं पूर्व्वोक्तपीठोपरिस्थितं गुरुपदारविन्दद्वयं भजामि ध्याये इत्यन्वयः । पदारविन्दद्वयं विशेषयति ।

निशक्तमणिपादुकानियमिताघकोलाहलमिति । निशक्तमणिपादुकया सेवितमणिपादुकाद्वारा नियमितः निरस्तीकृतः अघकोलाहलः पापानां प्रादुर्भावो येन तादृशमित्यर्थः । यद्वा निशक्तो निबद्धो मणिर्यत्र पादुकायां सा मणिपीठमण्डलरूपपादुका तया नियमितः अघकोलाहलः येनेत्यर्थः तत्पादुकोपरि गुरुचरणचिन्तनेन पापनाशात् । अथवा निशक्त आरूढो मणिर्गुरुचरणरूपचिन्तामणिर्यासु पञ्चपादुकासु ताभिर्नियमिताघकोलाहलमित्यर्थः । ततश्च पञ्चपादुकाध्यानपूर्व्वकं तदुपरि गुरुचरणचिन्तनेनैव पापनाशात् पापनाशे पञ्चपादुकानां ध्यानरूपव्यापारसाध्यत्वेन द्वारत्वमिति ।

स्फुरत्किशलयारुणम् । स्फुरतां किशलयानां पल्लवानामरुणतुल्यमरुणं यत्रेति । आम्रकेन्दुकादिपल्लवानां प्रथमोद्गमे रक्तवर्णत्वात् तत्रैव दृष्टान्तः । नखसमुल्लसच्चन्द्रकं नखा एव समुल्लसच्चन्द्राः निर्म्मलप्रकाशमानचन्द्रस्वरूपा यत्रेत्यर्थः ।

परामृतसरोवरोदितसरोजसद्रोचिषम् परामृतसरोवरे उदितं यत्सरोजं पद्मं तद्वत् सद्रोचिषं निर्म्मलप्रकाशो यस्येति । अयम्भावः श्रीनाथस्य चरणाभ्यां निरन्तरं परमामृतं निःसरति । अतएवोक्तं पूर्णानन्देन—

सुधाधारासारं निरवधि विमुञ्चन्नतितरां
यतेः स्वात्मस्नानं दिशति भगवान्निर्म्मलमतेः ॥ इति ॥

एवं परामृतं सरोवरस्वरूपं तदुपरिस्थितं चरणं पद्मवत् प्रकाशते इति । ननु उक्तपद्मद्वयकर्णिकापुटे गुरुस्थितिर्विधीयते । तत्किमधःस्थितद्वादश-दलकमलकर्णिकायां किंवा ऊर्द्ध्वस्थसहस्रदलकर्णिकायामित्याकाङ्क्षायामत्र वदन्ति । बृहच्छ्रीक्रमे—

सर्व्वोपरि ततो ध्यायेत् पश्चिमाननपङ्कजम् ।

स्रवन्तममृतं दिव्यं देव्यङ्के कमलान्तरे ॥ इति ॥

देव्यङ्के गुरुशक्त्यङ्के ।

यामले—

ध्यत्वं मूर्द्ध्नि सहस्रपत्रकमलं रक्तं सुधावर्षिणम् ॥ इति ॥

गुरुगीतायाम्—

हंसाभ्यां परिवृत्तपत्रकमले दिव्यैर्ज्जगत्कारणै-
र्व्विश्वोत्तीर्णमनेकदेवनिलयं स्वच्छन्दमात्मेच्छया ।
तत्तद्योग्यतया स्वदेशिकतनुं भावैकदीपाङ्कुरं
प्रत्यक्षाक्षरविग्रहं गुरुपदं ध्यायेद्विबाहुं गुरुम् ॥ इति ॥

श्यामासपर्य्याधृतवचनम्—

शिरःपद्मे सहस्रारे शुक्लवर्णे त्वधोमुखे ।
तरुणारुणकिञ्जल्के सर्व्ववर्णविभूषिते ॥
कर्णिकान्तःपुटे तत्र द्वादशार्णसरोरुहे ।
तेजोमये कर्णिकान्तश्चन्द्रमण्डलमध्यगे ॥
अकथादित्रिरेखीये हलक्षत्रयमण्डिते ।
हंसपीठे मन्त्रमये स्वगुरुं शिवरूपिणम् ॥ इति ॥

एवमादिवचनैर्द्वादशदलकमलकर्णिकायां गुरोरधिष्ठानं विहितम् ।

कङ्कालमालिनीतन्त्रे—

सहस्रदलपद्मस्थमन्तरात्मानमुत्तमम् ।
तस्योपरि नादविन्दोर्म्मध्ये सिंहासनोज्ज्वलम् ।
तस्मिन्निजगुरुं नित्यं रजताचलसन्निभम् ॥ इत्यादि ॥

यामले—

सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजम्—इत्यादि ।

पुरश्चरणरसोल्लासे—

श्रीमहादेव उवाच

सहस्रारे ततो नित्ये पङ्कजे परमाद्भुते ।
पद्मस्य वीजकोषे तु भावयेत् स्वगुरुं सदा ॥

श्रीपार्व्वत्युवाच

सहस्रारे महापद्मे सदा चाधोमुखे प्रभो ।
गुरुस्थितिः कथं देव सततं वद निश्चयम् ॥

श्रीमहादेव उवाच

शृणु प्रिये प्रवक्ष्यामि यदेतत् पृष्टमुत्तमम् ।
सहस्रारं महापद्मं सहस्रदलसंयुतम् ॥
सदाशिवपुरं तत्तु नित्यानन्दमयं सदा ।
नानागन्धयुतं पद्मं सहजानन्दमन्दिरम् ॥
सदा चाधोमुखं पद्मं वीजमूर्द्धमुखं सदा ।
त्रिकोणाकाररूपेण कुण्डलीसंयुतेन च ॥ इत्यादि ॥

बालाविलासतन्त्रे—

श्रीदक्षिणामूर्त्तिरुवाच

प्रातरुत्थाय धवले सहस्रारे गुरुं स्मरेत् ।
अधोमुखे महापद्मे सर्व्ववर्णविभूषिते ॥
अकथादित्रिरेखाढ्यहलक्षत्रयभूषिते ।
तदन्तश्चन्द्रविम्बस्थहंसपीठे स्मिताननम् ॥

श्रीदेव्युवाच

अधोमुखे गुरुस्तत्र कथं तिष्ठति च प्रभो ।

पादुकापञ्चकस्तोत्रं पञ्चवक्त्राद्विनिर्गतम्।
षड़ाम्नायफलप्राप्तं प्रपञ्चे चातिदुर्ल्लभम्॥ ७॥

---

श्रीदक्षिणामूर्त्तिरुवाच

अधोमुखस्य पद्मस्य कर्णिकामध्यसंस्थितम्।
चन्द्रबिम्बञ्चोर्द्ध्ववक्त्रं तत्र हंसस्ततः स्थितिः॥ इति॥

एतदादिभिर्व्वचनैः सहस्रदलकर्णिकायां गुरोरवस्थितिर्व्विधीयते। एवञ्चोभयकल्पे विहिते श्रीनाथस्य आज्ञया तयोरेकतरम् अवधार्य्यानुष्ठातव्यमिति सिद्धान्तः।

अतएवोक्तं कुलार्णवे एकादशोल्लासे—

पारम्पर्य्यागमाम्नायं मन्त्राचारादिकं प्रिये।
सर्व्वं गुरुमुखाल्लब्धं सफलं स्यान्न चान्यथा॥ इति॥ ६॥

स्तोत्रफलश्रुतिमाह। पादुकापञ्चकस्तोत्रमिति। पदरक्षणाधारः पादुका तासां पञ्चकम्। पद्मम्॥ १॥ तत्कर्णिकास्थले अकथादित्रिकोणम्॥ २॥ तदन्तर्नादविन्दुमणिपीठमण्डलम्॥ ३॥ तदधःस्थहंसः॥ ४॥ पीठोपरि त्रिकोणम्॥ ५॥ समुदायेन पञ्चसंख्यकम्।

अथवा पद्मम्॥ १॥ त्रिकोणम्॥ २॥ नादविन्दु॥ ३॥ मणिपीठमण्डलम्॥ ४॥ तदूर्द्ध्वस्थत्रिकोणाकारकामकलारूपेण परिणतो हंसः॥ ५॥ इति पञ्चसंख्यकम्। तस्य स्तोत्रम्। फलश्रुतिसहितसप्तश्लोकात्मकमित्यर्थः।

पञ्चवक्त्राद्विनिर्गतमिति।

शिवस्य पञ्चवक्त्राणि यथा लिङ्गार्च्चनतन्त्रे—

सद्योजातं पश्चिमे तु वामदेवं तथोत्तरे।
अघोरं दक्षिणे ज्ञेयं पूर्व्वे तत्पुरुषं स्मृतम्।
ईशानं मध्यतो ध्येयं चिन्तयेद्भक्तितत्परः॥ इति॥

तेभ्यो विनिर्गतं तैरुक्तम्।

षड़ाम्नायफलप्राप्तमिति । षड्मुखानि यथा पूर्व्वोक्तानि पञ्च । षष्ठवक्त्रन्तु पूर्व्ववक्त्रस्याधस्तात् गुप्तं तामसम् । एतत्तु शिवतन्त्रे सद्योजातादिषड्वक्त्र-न्यासे "ॐ हं क्लीं श्रौं क्लीं तामसाय स्वाहा" इत्यनेन तच्चोक्तध्याने "नील-कण्ठमधोवक्त्रं कालकूटस्वरूपिणम्" इत्यनेन च प्रकटितम् । मिलित्वा षड्वक्त्राणि भवन्ति । एभिः षड्वक्त्रैराम्नायते कथ्यतेऽसौ इति षड़ाम्नायः शिवोक्तस्तोत्रसमुदायः । तस्य फलं तत्तन्मन्त्रसमुदायविहितकर्म्मफलं प्राप्यते येनेत्यर्थः ।

प्रपञ्चे लिङ्गाद्याब्रह्मपर्य्यन्तमायाप्रकटितसंसारे । अतिदुर्ल्लभमिति अति-दुःखेन लभ्यते यत्तदतिदुर्ल्लभं तल्लाभकरणपुण्यपुञ्जजनकजन्मान्तरीयतपसः क्लेशस्वरूपत्वात् दुःखलभ्यत्वमिति भावः ॥ ७ ॥

इति श्रीकालीचरणकृता पादुकापञ्चकस्तोत्रस्य
अमलानामटिप्पनी समाप्ता ।

---

॥ * ॥ ॐ तत् सत् ॥ * ॥

# षट्चक्रविवृतिः ।

## ( विश्वनाथकृता । )

ॐ श्रीगुरवे नमः ।

टीका श्रीविश्वनाथेन नत्वा सन्तन्यतेऽम्बिकाम् ।
कैवल्यकलिकातन्त्रद्वितीयपटलस्य च ॥

ब्रह्मरूपी परमेश्वरः वशिष्ठाय कुलभावमुक्त्वा कुलाचारं विना तस्मिन् नाधिकारः अतस्तदुपदेष्टुं गुरुसम्मानपूर्व्वकमाह यज्ज्ञातेनेत्यादि । तथाच कालिकापुराणे—

य: पूजयेद्वान्यभावैर्न तस्य ऋणशोधनम् ।
पितृदेवनरादीनां जायते न कदाचन ॥
सोऽभ्यस्य त्रिपुरायोगं तेन योगेन संयुतः ।
जायते यदि सुप्राज्ञस्तदा मोक्षमवाप्नुयात् ॥

त्रिपुरायोगं कुण्डलिनीयोगं कुण्डलिन्याः सर्व्वदेवात्मकत्वात् ।

उक्तं "सर्व्वदेवमयी सा हि" इति ॥ * ॥

मेरोर्म्मेरुदण्डस्य बाह्यप्रदेशे क्रोड़े शशिमिहिरशिरे इड़ापिङ्गलानाड्यौ । "मेरुदण्डवहिःपार्श्वे चन्द्रसूर्य्यात्मके" इति मायातन्त्रात् । तयोः स्थिति-प्रकारमाह टीकाकारधृततन्त्रे—

वाममुष्कात्तु सम्भूता नाड़ी दक्षिणगामिनी ।
सुषुम्नाकलिता जाता वामभागं समाश्रिता ॥

ह्रद्गता दक्षभागस्था जत्रुमध्यं समाश्रिता ।
वामन्तु नासिकाद्वारं प्राप्नोति गिरिजेऽमले ॥
नाड़ी दक्षिणमुष्कात्तु सञ्जातोत्तरगामिनी ।
सुषुम्नाकलिता जाता भागं दक्षिणमाश्रिता ॥
ह्रद्गता वामभागस्था जत्रुमध्यं समाश्रिता ।
दक्षिणं नासिकाद्वारं प्राप्नोति गिरिजेऽमले ॥

चापाकृतिर्भूत्वा दक्षिणगामिनी उत्तरगामिनीति ध्येयम् । मध्ये नाड़ी सुषुम्नेति । मध्ये मेरुदण्डस्य मध्यस्थविवरे ।

मेरुदण्डवहिःपार्श्वे चन्द्रसूर्य्यात्मिके शिरे ।
मध्ये सुषुम्ना—इति मायातन्त्रात् ।

स्पष्टमाह सारसमुच्चये—

या मुण्डाधारदण्डान्तरविवरगता हारनीहारगौरी
सौधीं धारां नभोऽम्भोरुहकुहरविधोः संस्रवन्तीं वहन्ती ।
तस्या वज्राख्यनाड्या खगमुदरदरीमध्यगं यो विदध्यात्
तस्या ब्रह्माण्डभाण्डप्रलयमपघनं स्याद्घनं मृत्युमृत्योः ॥

सा कीदृशी ? हारनीहारगौरी मुक्ताहारनीहारगौरी । "गौरोऽरुणे सिते पीते" इत्यमरः । एतेन सुषुम्नान्तर्गतायाः वज्राया मेरुदण्डान्तर्व्विवरगतात्वकथनेन सुषुम्नाया अपि मेरुदण्डान्तर्व्विवरगतात्वसिद्धिः । यद्वा या मुण्डाधारदण्डे यदन्तरं विवरं तत्र विवरगता अर्थात् सुषुम्नाया विवरगता ।

अन्तरं अवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये ।
छिद्रात्मीय विना वहिरवसरमध्ये अन्तरात्मनि च ॥ इत्यमरः ।

एवञ्च सुषुम्नाकलिता इति परम्परया आश्रिता इत्यर्थः । यद्वा तत्र तत्र स्थाने मेरुदण्डं भित्त्वा सुषुम्नाकलिता इत्यर्थः । गौतमीयेऽपि—

विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं मुने ।
चन्द्रसूर्य्याग्नितेजोभिर्ज्जीवब्रह्मैक्यरूपकम् ॥

तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड्यो मताः।
तासु मुख्या दशप्रोक्तास्तासु तिस्रो व्यवस्थिताः॥
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्य्याग्निरूपिणी।
इड़ावामे स्थिता नाड़ी शुक्ला चन्द्रस्वरूपिणी॥
शक्तिरूपा तु सा नाड़ी साक्षादमृतविग्रहा।
दक्षिणे या पिङ्गलाख्या पुंरूपा सूर्य्यविग्रहा।
सर्व्वतेजोमयी सा तु सुषुम्ना वह्निरूपिणी॥

मेरुदण्डे मेरुदण्डान्तरविवरे। सारदायामपि—

षसवत्यङ्गुलायामं शरीरमुभयात्मकम्।
गुदध्वजान्तरे कन्दमुत्सेधाद्द्व्यङ्गुलं विदुः॥
तस्माद्द्विगुणविस्तारं वृत्तरूपेण शोभितम्।
तत्र नाड्यः समुत्पन्ना मुख्यास्तिस्रः प्रकीर्त्तिताः॥
इड़ावामे स्थिता नाड़ी दक्षिणे पिङ्गला मता।
तयोर्म्मध्यगता नाड़ी सुषुम्ना वंशमाश्रिता॥
पादाङ्गुष्ठद्वयं याता शिफाभ्यां शिरसा पुनः।
ब्रह्मस्थानं समापन्ना चन्द्रसूर्य्याग्निरूपिणी॥

भट्टाः शिफाभ्यां मूलाभ्याम्। शिरसा अग्रभागेन। वंशं पृष्ठवंशम् आश्रित्य। विवरगतात्वमुक्तम्। या मुण्डाधारदण्डान्तरविवरगतेत्यनेनाहुः। तन्त्रान्तरे तु—

व्योम प्रोज्झित्य नासाग्रे गतौ चन्द्रदिवाकरौ।
अधोवक्त्रं महापद्मं क्रोड़ीकृत्य सुषुम्नया॥
व्याघुट्य नासिकामध्यं गतं चित्रा तु तद्गता।
ऊर्द्ध्वं भित्त्वा तु लिङ्गं वै इतरान् पुष्करान् तथा॥
वहिरुद्गमनाकाङ्क्षाकाङ्क्षिनी मोक्षदायिनी।
जीवेनाहतसम्बन्धात् स्थिता सप्तमसंविधौ॥

तद्गता सुषुम्नात्र सा तु तत्प्रदेशं गता लिखिष्यामः न विरोधात्।

अतएव सप्तमसंविधौ इत्युक्तम्। नासिकामध्यं नासिकाद्वयमध्यस्थानं न तु नासिकाद्वयमध्यं गता तत्र इड़ापिङ्गले गते। अतएव "कुम्भयेच्च सुषुम्नया" इति सङ्गच्छते।

त्रितयेति। यतः सोमसूर्य्याग्निरूपा अतस्त्रितयगुणमयी। सुषुम्ना कीदृशी? स्मेरं प्रस्फुटितं तथाच प्रस्फुटितकनकधूस्तूरपुष्पमिव ग्रथितं वपुर्यस्याः सा तथा। यथा कनकधूस्तूरपुष्पस्य मध्ये अन्यत् पुष्पम् एवम्भूत-ग्रथिततमवपुरिति भावः। केचित्तु प्रथिततमवपुरिति पाठमाहुः। कुतः सुषुम्ना उत्पन्ना तदाह कन्दमध्यादिति। कन्दरूपमाह सारदायाम्—

गुदध्वजान्तरे कन्दमुत्सेधाद्द्व्यङ्गुलं विदुः।
तस्य द्विगुणविस्तारं वृत्तरूपेण शोभितम्॥
तत्र नाड्यः समुत्पन्नाः। इत्यादि।

गोरक्षसंहितायान्तु—

ऊर्द्ध्वं मेढ्रादधो नाभेः कन्दयोनिः खगाण्डवत्।
तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः॥

इत्युक्तम्। कन्दयोनिः कन्दरूपोत्पत्तिस्थानम् नाड़ीनामित्यर्थः। वज्रा-ख्यानाड़ीमाह वज्राख्येति। मेढ्रदेशात् लिङ्गमूलात् शिरःपर्य्यन्ता इत्यर्थः। कुत्र सा? तदाह। अस्या मध्ये सुषुम्नायामध्ये ज्वलन्ती उज्ज्वलन्तीत्यर्थः। "मध्यमञ्चावलग्नञ्च मध्योऽस्त्री" इत्यमरः। मायातन्त्रेऽपि—

मध्ये सुषुम्ना तन्मध्ये वज्राख्या लिङ्गमूलतः॥ इति॥ *॥

चित्रानाड़ीमाह तन्मध्य इत्यादिना। तन्मध्ये वज्रामध्ये। प्रणव-विलसिता आज्ञाचक्रस्थप्रणवाधारत्वात्। सा कीदृशी? सकलसरसिजान् भित्त्वा एतत् पद्मं ग्रथनरचनया देदीप्यते। पद्मं किम्भूतम्? मेरुमध्यान्तरस्थं मेरुमध्ये यदन्तरं विवरं परम्परया तत्स्थम्।

मध्ये सुषुम्ना तन्मध्ये वज्राख्या लिङ्गमूलतः।
तन्मध्ये चित्रिणी सूक्ष्मा बिसतन्तु सहोदरा।
मूलमूलात् सहस्रारस्तदन्तर्ब्रह्मनाड़िका॥

तथा—

मूलादिषट्सरोजातं चित्रिणीग्रथितं प्रिये।
लिङ्गाधोर्द्धनाभिवुक्कण्ठभ्रूमध्यदेशजम्॥

इति मायातन्त्रात्। मूलमूलात् सहस्रारस्तन्मूलाधारमूलात् सहस्रार इति। तथाच सहस्रारं चित्रिण्या ग्रथितम्। अत्र च—

तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा।
सर्व्वतेजोमयी सा तु योगिनीहृदयङ्गमा।
विसर्गाद्विन्दुपर्य्यन्तं व्याप्य तिष्ठति तत्त्वतः॥

इति गौतमीयवचनस्य विन्दुपर्य्यन्तं इन्दुपर्य्यन्तमिति वा पाठः। ललाटस्थ-विन्दुपर्य्यन्तं इन्दुपर्य्यन्तं वा व्याप्य सहस्राराधोदेशपर्य्यन्तगा तद्वतीत्यर्थो बोध्यः।

केन चित्रायां पद्मानि सन्ति तदाह तन्त्रचूड़ामणौ—

तयैव ग्रथितं पद्मं मूलादिपद्मपञ्चकम्।
कलिकाकाररूपेण डाकिन्याद्यवलम्बितम्॥

तयैव चित्रयैव पद्मं मूलादिषड़िति शेषः। पद्मपञ्चकं स्वाधिष्ठानादि-पञ्चकं कलिकाकाररूपेण ग्रथितमिति सामान्यत उक्ता विशेषरूपेणोक्तम्। एतेन मूलाधारपद्मं विकसितं एवं समस्तपद्मान्यधोमुखान्येव। तदुक्तं कौलिकतन्त्रे ताराकल्पे—

सप्तपद्मं मयैवोक्तं सुषुम्नाग्रथितं प्रिये।
अधोवक्त्रादिमान्तञ्च नाख्येयं यस्य कस्यचित्॥

येन तस्याश्चित्रात्वं तदाह श्रीक्रमे—

तस्याश्चान्तर्गता तिष्ठेत् चित्राख्या योगिवल्लभा।
पञ्चवर्णोज्ज्वला देवि पञ्चभूतप्रकाशिनी।
पञ्चदेवाः पर्व्वलग्नाः सप्तान्या नाड्यो मताः॥

अन्यत्रापि—

ब्रह्मा जनार्द्दनो रुद्र ईश्वरश्च सदाशिवः।
चित्राख्यनाड्यन्तरस्थाः पञ्चभूताधिदेवताः॥

अत्र पञ्चभूतानां पञ्चाधिदेवता उक्ताः । भ्रूमध्ये तु परशिवोऽस्ति लिखिष्यमानवचनात् ॥

ब्रह्मनाड़ीमाह तस्यान्तरिति । तस्यां चित्रायां तद्ब्रह्मनाड़ी प्रसिद्ध-ब्रह्मनाड़ी । हरमुखकुहरात् मूलाधारस्थस्वयम्भूलिङ्गमुखविवरात् । आदि-देवान्तसंस्था ब्रह्मपर्य्यन्ता । मायातन्त्रेऽपि "शिरा स्यात् ब्रह्मपर्य्यन्तम्" इत्यादि । विद्युन्मालेव विलासो यस्याः सा । पद्मसूत्रतुल्या अतः सूक्ष्मा । शुद्धज्ञानिनः प्रबुध्यन्ते ज्ञायन्ते यया सा तथा । अमृतस्राविणीत्वात् सकल-सुखयुता । भावो मनोधर्म्मः स्वभावः आत्मधर्म्मः शुद्धो भावः स्वभावो यस्याः सा इति पञ्चम्यन्तबहुव्रीहिः । "भावो हि मानसो धर्म्मः" इत्युक्तः ।

येन द्वारेण कुण्डलिन्या ब्रह्मणि गमनं तत् द्वारमाह ब्रह्मद्वारमिति । तदास्ये ब्रह्मनाड्या आस्ये ।

मूलाधारात् सहस्रारस्तदन्तर्ब्रह्मनाड़िका ।
शिरा स्यात् ब्रह्मपर्य्यन्तं तदन्तर्द्वारमुत्तमम् ॥

इति मायातन्त्रात् ।

ब्रह्मद्वारमुखं नित्यं मुखेनावृत्य तिष्ठति ।
येन द्वारेण गन्तव्यं ब्रह्मस्थानं निरामयम् ।
मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी ॥

इति गौराचसंहितावचनाच्च । सुधेति सुधाकणास्रुतिप्रदेशं ग्रन्थिस्थानम् एतद्द्वारं सुषुम्नाया नाड्या वदनं धीरा वदन्ति ॥ * ॥

आधारपद्ममाह अथेत्यादिना ।

षण्णवत्यङ्गुलायामं शरीरमुभयात्मकम् ।
गुदध्वजान्तरे कन्दमुत्सेधाद्द्व्यङ्गुलं विदुः ।
तस्य द्विगुणविस्तारं वृत्तरूपेण शोभितम् ॥

इति सारदोक्तकन्द एव मुख्यनाड़ी एव ग्रन्थिस्तदूर्द्ध्वं ध्वजाधः सुषुम्नास्य-लग्नम् ।

तथा च मायातन्त्रे—

मुख्यनाड़ीत्रयं ग्रन्थेरूर्द्धं वज्राध ईश्वरि ! ।
रक्तपर्णो वेदवर्णो मूलाधारोऽप्यवाङ्मुखः ॥ इति ॥

उद्यत् प्रस्फुटितम् ।

तथैव ग्रथितं पद्मं मूलादिपद्मपञ्चकम् ।
कलिकाकाररूपेण डाकिन्याद्यवलम्बितम् ॥

इति वचनात् । पूर्व्वमेव व्याख्यातं तत् । सुवर्णाभवर्णैरिति । तथाच दक्षिणामूर्त्तौ—

आधारे स्वर्णवर्णेऽस्मिन् वादिसान्तानि संस्मरेत् ।
द्रुतसौवर्णवर्णानि वर्णानि परमेश्वरि ॥ इति ॥

सारसमुच्चये षट्सु पद्मेषु वर्णाः विन्दुयुक्ता उक्ता ग्रन्थगौरवभिया नात्र प्रकटिताः । चतुष्कोणचक्रमिति ।

तथाच मायातन्त्रे—

तत्कर्णिकान्तरे पृथ्वी चतुष्कोणा सुपीतभा ॥ इति ॥

तथा तन्त्रान्तरे—

भूगृहं चतुरस्रं स्यादष्टवज्रविभूषितम् ॥ इति ॥

धरायाः स्वबीजमिति । तथाच सारदायाम्—

वृत्तं दिवस्तत् षड्विन्दुलाञ्छितं मातरिश्वनः ।
त्रिकोणं स्वस्तिकोपेतं वह्नेरर्द्धेन्दुसंयुतम् ॥
अम्भोजमम्भसो भूमेश्चतुरस्रं सवज्रकम् ।
तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधाः ।
वर्णैः स्वैरञ्जितान्यासन् स्वस्वनामावृतान्यपि ॥

तत्तद्भूतसमवर्णानि मण्डलानि तथा स्वैर्व्वर्णैः ह य र व ल वर्णैर्युक्तानि । तथा स्वस्वनामावृतानि पृथिव्यादीनां स्वस्वनामावृतानीत्यर्थः । एतदनुसारेण सर्व्वेषु पत्रेषु स्वस्वबीजानि ज्ञेयानि ॥ * ॥

चतुर्व्वाहुः इति । अत्र पद्मे ब्रह्मास्तीत्याह तदङ्कइत्यादिना । नवीनार्क-

तुल्यप्रकाशः रक्तवर्णः सृष्टिकारी ब्रह्मा चतुर्बाहुयुक्तः। चतुर्भागवेदो मुखाम्भोजलक्ष्मीर्यस्य स तथा ॥ * ॥

अत्र डाकिनी शक्तिरस्ति इत्याह वसेदत्रेति। तथाच भट्टधृततन्त्रे—मूलाधारं ब्रह्मस्थानमेतत् सौवर्णाभं डाकिनी देवी तत्रेति। एषा डाकिनी अनेकसूर्य्यप्रकाशा। अतिशयरक्ता इत्यर्थः। तन्त्रान्तरे—

रक्तां रक्तत्रिनेत्रां पशुजनभयकृच्छूलखट्वाङ्गहस्तां
वामे चैकं दधानां चषकमपि सुधापूरितं चैकवक्त्राम्। इति।

शुद्धबुद्धेः प्रकाशं वहन्तीत्यन्वयः ॥ * ॥

मध्ये अवान्तरदेवतादिकमभिधाय प्रकृतमाह वज्राख्येति। वज्राख्याया वक्त्रदेशे सामीप्ये सप्तमी अधोभागे इति यावत्।

मुख्यनाडीत्रयं ग्रन्थेरूर्द्धं वज्राध ईश्वरि!।

इति मायातन्त्रात्। कर्णिकामध्यसंस्थं त्रैपुराख्यं त्रिकोणं एतत् कामरूपाख्यं त्रिकोणं तत् कामरूपाख्यं कन्दर्पो वह्निः समन्तात् भ्रमति। नाम प्रकर्षे जीवेशो वायुश्च निवसति। तथाच मायातन्त्रे—

तत्कर्णिकान्तरे पृथ्वी चतुष्कोणा सुपीतभा।
तन्मध्ये योनिमध्ये च वह्निवाय्वोः समाश्रये ॥ इति ॥

श्रीक्रमेऽपि—

कर्णिकायां स्थिता योनिः कामाख्या परमेश्वरी।
अपानाख्यं हि कन्दर्पम् आधारे तत्त्रिकोणके।
स्वयम्भूलिङ्गं तन्मध्ये पश्चिमाभिमुखं प्रिये ॥

रुद्रयामलेऽपि—

भ्रमद्योनिगतं ध्यायेत् कामं बन्धूकसन्निभम्।
ज्वलत्कालानलप्रख्यं तड़ित्कोटिसमप्रभम् ॥

तदेवाह जीवेश इत्यादिना। बन्धूकपुष्पसमूहमभिहसन् तदधिकरक्तवर्ण इति भावः। "बन्धूकः बन्धुजीवकः" इत्यमरः। "आधारे तत्त्रिकोणके" इत्युक्तत्वात्।

तथा—

मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मिके।
मध्ये स्वयम्भूलिङ्गस्तु कोटिसूर्य्यसमप्रभः॥

इति गौतमीयात्। तथा—

अधोमुखो लिङ्गरूपी हेमाभो भ्रमणे रतः॥

इति॥ *॥

पुनरपि मायातत्त्वाद्याह तन्मध्ये इति। त्रिकोणमध्ये लिङ्गरूपि स्वयम्भूलिङ्गम्। द्रुतसुवर्णकला इति कोमलः सुवर्णवर्णयोगित्वात् कोमलत्वाच्च तथाभिहितम्। पश्चिमास्यः अधोमुखः। ज्ञानध्यानाभ्यां प्रकाश्यते यः स तथा। प्रथमकिसलयाकाररूपः नूतनपल्लवाङ्कुराकारः भिद्यते इति। तथाच पूर्णचन्द्रादधिकरससमूह इत्यर्थः। स्निग्धं सन्तानं स्निग्धसमूहं हसतीति स्निग्धसन्तानहासी काशीवासीत्यादिविशेषणम्। सरितां आवर्त्तः चक्रवत् जलानां भ्रमणं तद्रूपप्रकाशो यस्य स तथा। "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः॥ *॥

तल्लिङ्गं सार्द्धत्रिवलयेनावेष्ट्य कुण्डलिनी शक्तिरस्ति इत्याह तस्योर्द्ध्वे इत्यादिना। विसतन्तुसोदरतुल्या सा चासौ कला प्रकृतिश्चेति सा तथा। अतः सूक्ष्मा। नवीनचपलामाला तस्या विलासनशोभया सह आस्पदं आस्पर्द्धा यस्याः सा तथा। "तड़ित् सौदामिनी विद्युत् चञ्चला चपलापि च" इत्यमरः। सुप्ता निद्रिता शिवोपरि लसत् सार्द्धत्रिवृत्ता आकृतिः शरीरं यस्याः सा तथा। सा तु अधोवक्त्रा। यथा श्रीक्रमे—

अधोवक्त्रा स्थिता देवी ऊर्द्ध्वं पुच्छातिशोभना।
अत्र विद्युल्लताकारा कुण्डली परदेवता॥
परिस्फुरति सर्व्वात्मा सुप्ता हि भुजगाकृतिः।
ब्रह्मद्वारमुखं नित्यं मुखेनावृत्य तिष्ठति॥
येन द्वारेण गन्तव्यं ब्रह्मद्वारं मनोमयम्।
मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी॥

मस्तके मणिवद्भिन्ना स्वयम्भूलिङ्गवेष्टिनी ॥

योगान्तरेऽपि—

मुखेनाच्छाद्य तद्द्वारं कुण्डलीशक्तिरुज्ज्वला।

निद्रावशगता देवी प्रसुप्तभुजगोपमा ॥

तथा मायातन्त्रेऽपि—

सार्द्धत्रिवलयानन्दा नन्दिता भास्करप्रभा ॥ इति ॥ * ॥

कूजन्तीति। उत्थिता सतीति शेषः। तथा च तन्त्रान्तरे—

झिल्लीराव्यक्तमधुरा कूजन्ती सततोत्थिता ॥ इति ॥

कोमलवाक्यैर्वाचं कूजन्तीत्यर्थः।

तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्।

वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः ॥

इति सारदोक्तेः तत् चैतन्यम्। श्वासोच्छ्वासविभञ्जनेन वायुना यया जगतां जीवः जीवात्मा हंसः धार्य्यते।

बिभर्त्ति कुण्डली शक्तिरात्मानं स्वं समाश्रिता।

हंसः प्राणाश्रयो नित्यं प्राणी नाड़ीपथाश्रयः ॥

आधारादुद्गतो वायुर्यथावत् सर्व्वदेहिनाम्।

देहं प्राप्य स्वनाड़ीभिः प्रयाणं कुरुते बहिः।

द्वादशाङ्गुलमानेन तस्मात् प्राण इतीरितः ॥

भट्टाः कुण्डली आत्मानं परमात्मानं बिभर्त्ति तद्योगिभासिनीत्यर्थः। कीदृशी? स्वं जीवात्मानम् आश्रिता जीवाधिष्ठाना सतीत्यर्थः। हंसः प्राणाश्रयः प्राणवायुसमाश्रयः प्राणः नाड़ीपथाश्रयः। कथं प्राणस्य नाड़ीपथाश्रयत्वम्? इत्यत आह आधारेति। प्रयाणं कुरुते इति प्राणः इति प्राणपदव्युत्पत्तिरपि दर्शितेत्यन्तेनाहुः।

दक्षिणामूर्त्तौ तु—

उच्छ्वासे चैव निश्वासे हंस इत्यक्षरद्वयम्।

तस्मात् प्राणस्तु हंसाख्य आत्माकारेण संस्थितः ॥

षट्शतान्यधिकान्यत्र सहस्राण्येकविंशतिः।
अहोरात्रं चरेद्वायुः स जपो मोक्षदायकः॥

अन्यत्रापि—

सःकारेण वहिर्याति हंकारेण विशेत् पुनः॥ इति॥
प्रोद्दामदीप्तश्रेणी॥ * ॥

तस्याः कुण्डलिन्या मध्ये परमा नाम्नी शक्तिरुच्यते तन्मध्ये इत्यादिना। परमा उत्कृष्टा परापरानाम्ना अतिसूक्ष्मा।

तथाच भट्टधृततन्त्रे—

सूक्ष्मा कुण्डलिनीमध्ये ज्योतिर्म्मात्रया परा मता। इति।

सा एव परमात्मस्वरूपा। तथा च श्रुतिः—

तस्याः शिखाया मध्ये तु परमा सा व्यवस्थिता। इति।

नित्या ध्वंसप्रागभावरहिता। आनन्दपरम्परा आनन्दसमूहयुक्ता। अतिचपलायमाना विद्युल्लता इव लसत् दीधितिर्दीप्तिर्यस्याः सा तथा। यस्याः कलायाः प्रभया ब्रह्माण्डादिकटाहान्तं जगत् शरीरं भासते सा विजयते। नित्यज्ञानस्य उदयो यस्यां सा। काव्यबन्धैर्व्वाक्यैः बृहस्पतीन् सेवते गौरवे बहुवचनम्॥ * ॥

स्वाधिष्ठानाख्यपद्ममाह सिन्दूरेत्यादिना। अङ्गच्छदैः षट्पत्रैः विद्युत्प्रकारैर्व्वाद्यैः पुरन्दरान्तैर्व्वादिलान्तैः सविन्दुकं परिवृतं पद्मम्। तथा च मायातन्त्रे—

तदूर्द्ध्वे तु महेशानि स्वाधिष्ठानमृतुच्छदम्।
रक्तवर्णं कर्णिकायामजमर्द्धेन्दुसंयुतम्।
मण्डलं वारुणं देवि तदूर्द्ध्वे मणिपूरकम्॥ इति॥

दक्षिणामूर्त्तौ—

स्वाधिष्ठाने विद्रुमाभे वादिलान्तानि संस्मरेत्।
विद्युत्पुञ्जसमाभानि विद्युद्भासितमस्तके॥ इत्यादि॥

सारदायां विशदप्रकाशं शुक्लवर्णं तत्तङ्गतसमाभानीति प्रागुक्तम्।

अम्भोजं षड्दलपद्मं अर्द्धचन्द्रयुतम् ।
वं बीजं मकराधिरूढ़ं स्वाधिष्ठानं विष्णुगेहं प्रदिष्टम् ।
बालार्काभं राकिणी देवतात्र ॥

इति वचनात् ॥ * ॥

तस्याङ्के इत्यादि । नीलद्युतिरूपो मनोज्ञश्रियं शोभाम् आदधानः ।

गौतमीये—

स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ।

नीलाम्बुजे देवसद्दशकमनीयता शोभा यस्याः सा । नानायुधेति । तदुक्तं तन्त्रान्तरे—

श्यामां शूलाब्जहस्तां डमरुकसहितां तीक्ष्णटङ्कं वहन्तीम्
देवीं रक्तत्रिनेत्रां द्वितयदललसद्दंष्ट्रदन्तप्रभाभिः । इति ।

स मोहाद्भुतान्धकारसमूहे भानुतुल्यः तन्नाशको भवतीति । सुधेति महत्तुल्यकाव्यसमूहसम्पत्तिं भजन्ते । अत्र पश्यन्ती शक्तिरस्ति प्रमाणं विशुद्धपद्मव्याख्याने लिखिष्यते ॥ * ॥

मणिपूरपद्ममाह तस्योर्द्धे इत्यादिना ।

मणिवह्निनं तत् पद्मं मणिपूरं तथोच्यते ।

नीलवर्णे नीलवर्णडादिफान्तवर्णैर्युक्ते । तथा च दक्षिणामूर्त्तौ— सुनीले मणिपूरके डफान्तानि महानीलप्रभानि परिचिन्तयेत् । वह्नेर्मण्डलं बीजं चाह वैश्वानरस्येत्यादिना । वैश्वानरस्य वह्नेर्मण्डलं रक्तवर्णं त्रिकोणं तद्वाह्ये त्रिभिः स्वस्तिकैर्ईकाराकारैर्युक्तम् । मायातन्त्रे—

दशपत्रं पयोजातं कर्णिकायां महेश्वरि ।
वाह्नेयं मण्डलं रक्तं त्रिकोणं स्वस्तिकान्वितम् ॥

स्वबीजं रेफः । "वर्णैः स्वै रञ्जितान्यासन्" इति प्रागुक्तेः प्रातःसूर्य्यसमरक्तवर्णम् । मणिपूरन्तु नीलं रुद्रस्थानं लाकिनी देवतात्रेति वचनात् । तामाह रुद्रमूर्त्तिरित्यादिना । शुद्धसिन्दूररागः अतिशयरक्तवर्णः । वेदबाह्वुज्ज्वलाङ्गीत्यादि ।

तदुक्तं तन्त्रे—

कृष्णां देवीं त्रिवक्त्रां त्रिनयनसहितां कुब्जिनीमुग्ररूपां
वज्रं शक्तिं सदण्डामभयवरकरां दक्षवामे दधानाम्। इत्यादि।

ज्ञानेति। ज्ञानसमूहेन सह लक्ष्मीस्ताम्॥ * ॥

अनाहतपद्ममाह तस्योर्द्धे इत्यादि। बन्धूकपुष्पकान्तिस्वरूपरक्तवर्णं कादिठान्तैः द्वादशवर्णैः सिन्दूरवर्णैः युक्तम्। तथाच दक्षिणामूर्त्तौ—

पिङ्गवर्णं महावह्निकलिकाभानि संस्मरेत्।
कादिठान्तानि वर्णानि चतुर्थेऽनाहते प्रिये॥

तन्मध्ये षट्कोणपद्मं वायुमण्डलम्। तथाच मायातन्त्रे—

अनाहतं द्वादशारं रक्ताभं हृदि सुव्रते।
तन्मध्ये पावनं पद्मं षट्कोणं धूम्रवर्णकम्॥ * ॥

वायुबीजमाह तन्मध्ये इत्यादिना। पवनाचरं यं। प्रमाणं आधारपद्म-व्याख्याने उक्तम्। धूसरं ईषत् पाण्डुरम्। हस्तचतुष्टययुक्तं कृष्णसाराधिरूढ़म्। रक्तमनाहतमीश्वरगेहन्तु काकिन्यपीहोक्ता इति वचनात्। तदेवाह तन्मध्ये करुणानिधानमित्यादिना। ईश्वराभिधं ईश्वरनामानम्। हंसाभं सूर्य्यप्रभम्। अभयवरदपाणिद्वययुक्तम्। तत्र काकिनी नवतड़ित्पीता गौरवर्णा। त्रिनेत्रा। पाशकपालवराभयान् चतुर्भिर्भुजैः बिभ्रती। कङ्काल इति अस्थिमालाधरा। "स्यात् शरीरास्थिकङ्कालः" इत्यमरः। तथाच तन्त्रे—

काकिनीं मेघसंस्थाम्
पाशं शूलं कपालं डमरुमपि करैर्धारिणीं पीतवर्णां
दध्यन्ने सक्तचित्तां स्ववयवनमितां वारुणीमत्तचित्ताम्।

शूलडमरुस्थाने वराभयं तथा अस्थिमाला तन्त्रान्तरे उक्तम्।

बाणलिङ्गं तु तन्मध्येऽधोमुखे शक्तिके इति।

त्रिस्त्रिकोणयुक्ते इति क्रमात्। तथा—

तन्मध्ये बाणलिङ्गन्तु सूर्य्यायुतसमप्रभम्।
शब्दब्रह्ममयः शब्दो न हेतुस्तदहेतुकः॥

अनाहताख्यं तत्पद्मं पुरुषाधिष्ठितं परम्॥

पुरुषेण जीवात्मना इति गौतमीयाच्च। त्रिकोणं बाणलिङ्गं जीवात्मानञ्चाह एतन्नीरजे इत्यादिना। कनकं बन्धूकपुष्पसदृशं बन्धूकः पुष्पविशेषः तद्वदङ्गरागोज्ज्वलः।

हेमबन्धूककुसुमशरच्चन्द्रनिभानि च।

इति योगिन्येकवाक्यत्वात्। स्वयम्भूबाणलिङ्गेतरलिङ्गविशेषणं हेमादि। मौली मस्तके सूक्ष्मविभेदयुक्तो विवरयुक्तो मणिरिव दीप्तचिह्नालयः। शर्व्वस्य देवस्य पीठालयं निर्व्वातदीपशिखाकारहंसेन जीवात्मना शोभितम्। मायातन्त्रेऽपि—"आत्मा तत्र प्रदीपाभः" इति। भानोरित्यस्य मण्डलपदेनैकदेशेन सहान्वयः। तेन मण्डलमण्डितं अन्तरं मध्यं यस्य स चासौ लसत्किञ्जल्कश्चेति स तथा। तस्य शोभाधरम्। "किञ्जल्कः केशरोऽस्त्रियाम्" इत्यमरः॥ *॥

विशुद्धपद्ममाह विशुद्धाख्यमिति। हिमच्छायायुक्तस्योपरिलसितशरीरस्य चतुर्भिर्भुजैः पाशाङ्कुशादिलसितैः शोभितशरीरस्य दीप्तबुद्धेः उद्दीप्तज्ञानस्य। हिमाभः शुक्लः सदाशिव इत्याख्यायुक्तः सिद्धः प्रसिद्धः।

तथा तन्त्रान्तरेऽपि—

सदाशिवस्थानमिदं विशुद्धं शाकिन्यथत्रापि च धूम्रवर्णा।

सुधासिन्धोः शुद्धा शुक्ला। तथाच तन्त्रान्तरे—

देवीं ज्योतिःस्वरूपां त्रिनयनविलसत्पञ्चवक्त्रां सुदंष्ट्रीं

हस्ताम्भोजेषु चापं शूलमपि दधतीं पुस्तकं ज्ञानमुद्राम्। इति।

पुस्तकज्ञानमुद्रामिति शरं पाशम् इति तन्त्रान्तरे उक्तम्। सुधांशोश्चन्द्रस्य मण्डलम्। तथाच स्वच्छन्दसंग्रहे—

अमृताद्यास्तथाकाशं चन्द्रबिन्दुं तदूर्द्ध्वतः।

कण्ठोर्द्ध्वे परमेशानि लम्बिका चतुरङ्गुले॥

मतिशीलस्य ज्ञानशीलयुक्तस्य शुद्धेन्द्रियस्य जनस्य महामोक्षद्वारसम्पत्तिं दधत् मण्डलमित्यर्थः। स जीवी विपदां अन्धकारस्वरूपाणां ध्वंससूर्य्यप्रकाशः। अत्र वैखरी शक्तिरस्ति।

तथाच भट्टधृततन्त्रे—

सूक्ष्मा कुण्डलिनीमध्ये ज्योतिर्म्मात्रा परा मता।
अश्रोत्रविषयात् तस्मात् किञ्चिदेवोर्द्ध्वगामिनी॥
स्वयंप्रकाशा पश्यन्ती सुषुम्नानाभिमाश्रिता।
सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी॥
ततः संजल्पमात्रा स्यादविभक्तोर्द्ध्वगामिनी।
सैवोरुकण्ठतालुस्था शिरोघ्राणवदाश्रिता॥
जिह्वामूलोष्ठनिष्ठूरता क्षतवर्णपरिग्रहा।
शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी॥ * ॥

आज्ञाचक्रमाह आज्ञानामित्यादिना। गौतमीये—"आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम्।" चन्द्रतुल्यक्लेदजनकं ध्यानस्थानं प्रकाशस्वरूपम्। हक्षाभ्यां विशुद्धाभ्यां कलाभ्याम् अक्षराभ्यां युक्तं द्विपत्रम् अतीवशुभ्रम्। मायातन्त्रेऽपि—"आज्ञाख्यं द्विदलं शुभ्रम्" इति।

दक्षिणामूर्त्तावपि—

आज्ञायां विद्युदाभायां शुभ्रौ हक्षौ विचिन्तयेत्।

हाकिनीति। तन्त्रान्तरेऽपि—

आज्ञापुरं शारदचन्द्रशुभ्रं हाकिन्यथोक्ता शिवगेहमेतत्।

विद्या पुस्तकम्। मुद्रा ज्ञानमुद्रा अङ्गुष्ठतर्ज्जनीमिलिता। तन्त्रे—

आज्ञास्थां शुक्लवर्णां डमरुकसहितामक्षसूत्रं कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसद्वक्त्रषट्कोणयुक्ताम्। इति।

सूक्ष्मञ्च तत्प्रकाशस्वरूपञ्चेति तत् तथा।

मायातन्त्रेऽपि—

आज्ञाख्यं द्विदलं शुभ्रं कर्णिकायां मनोलयम्। इति।

सिद्धं नित्यं सिद्धशब्दो नित्यार्थः इति वैयाकरणाः। इतरशिवपदं इं कालं तरति इति इतरं शिवस्य परशिवस्य पदं इतरञ्च तत् शिवपदञ्चेति तत्।

लिङ्गचिह्नेन लिङ्गाकारेण प्रकाशो यस्य तत्। विद्युन्मालेव प्रकाशो यस्य तत्। योगिनीहृदये—

इतरच्च पुनस्तथा शरच्चन्द्रनिभं सदा। इति।

आनन्दलहर्य्यामपि—

तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं

परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता।

ताराषोढान्यासाधिकारतन्त्रे—

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।

ततः परशिवो देवि षट् शिवाः परिकीर्त्तिताः॥

मूलाधारादिविशुद्धपद्मेषु पञ्चशिवन्यासमभिधाय—

आज्ञाचक्रे च देवेशि हक्षवर्णसमन्वितम्।

परं शिवं ब्रह्मरूपं हाकिनीसहितं न्यसेत्॥ इत्युक्तम्॥

स च सहस्रारनिर्गुणपरशिवस्यांशस्वरूपी अपरः शिवो ज्ञेयः। अतएव ब्रह्मशिवत्वात् ब्रह्मस्वरूपमित्युक्तम्। न तु ब्रह्म इत्युक्तम्। परमकुलपदम् एतत् पर्य्यन्तं परमकुलपदमित्युपसंहारेणोक्तम्।

तथाच श्रीमते—

तत्रैतद्दक्षिणं षट्कमाज्ञापूर्व्वं कुलोद्भवम्। इति।

आनन्दलहर्य्यामपि—

महीं मूलाधारे कमपि मणिपूरे हुतवहं

स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि।

मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं

सहस्रारे पद्मे सह रहसि पत्या विहरसि॥

अत्र कं जलं स्वाधिष्ठाने मणिपूरे हुतवहमिति व्यत्ययेनान्वयः। ब्रह्मसूत्रेति ब्रह्मसूत्रस्य ब्रह्मनाड्याः प्रबोधो यस्मात् तत्। वेदानामादिबीजं प्रणवः तदत्र चिन्तयेत्। विलसितपरमोऽपूर्व्वसिद्धप्रसिद्धो यस्य सः। अत्रान्तरात्मा अस्तीत्याह शुद्धबुद्धेत्यादिना। शुद्धबुद्धः शुद्धस्वभावः स चासौ

अन्तरात्मा चेति सः। प्रदीपस्येव आभा दीप्तिर्यस्य ज्योतिषः एवम्भूत ज्योतिःप्रणवाभ्यां विरचितौ स्वरूपवर्णौ यस्य स वर्णशब्दः ।

श्रीक्रमेऽपि—

भ्रूमध्ये अन्तरात्मानमरूपं सर्व्वकारणम् ।
ॐकारज्योतीरूपन्तु प्रदीपाभं जगन्मयम् ॥

अतएव प्रकाशः ज्योतिःस्वरूपः। तदूर्द्धं पूर्व्वोक्तान्तरात्मोर्द्धं अर्द्धचन्द्रः चन्द्रार्द्धं विन्दुरूपी मकारः तदुपरिनाद इति व्यत्ययेनान्वयः। एवं नाद-प्रागबोधिनी लिखिष्यमाणयोगिनीहृदयात् ज्ञेया। असौ नादः अतीव शुक्ल इत्याह वनेत्यादिना। वनं जलं तद्वत् धवलवर्णः यश्च पीयूषाधारश्चन्द्रः तत्-समूहहासी तदधिकशुक्ल इति भावः ।

योगिनीहृदयेऽपि—

इन्दौ तदर्द्धे बोधिन्यां नादे नादान्त एव च । इति ।

इन्दौ विन्दौ तदर्द्धे अर्द्धचन्द्रे ।

स्वच्छन्दसंग्रहेऽपि—

तत्र विन्दोर्यथा विन्द्वावरणे स तदूर्द्धतः ।
सूर्य्यकोटिप्रतीकाशम् अतिदृष्टं महद्गुणम् ॥
तन्मध्ये दशकोटीनां संख्या योजनपञ्चकम् ।
तत्कर्णिकायामासीनः शान्त्यतीतेश्वरः प्रभुः ॥
पञ्चवक्त्रो दशभुजो विद्युत्पुञ्जनिभाकृतिः ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनुक्रमात् ॥
परिवार्य्य स्थितास्त्वित्राः शान्त्यतीतेश्वरस्य च ।
वामभागे समासीना शान्त्यतीता मनोन्मनी ॥
पञ्चवक्त्रधराः सर्व्वा दशवाह्विन्दुभूषणाः ।
विन्दुतत्त्वं समाख्यातं कोट्यर्व्वुदशतैर्वृतम् ॥
अर्द्धचन्द्रं तदूर्द्धन्तु बोधिनी तस्य चोपरि ।
ज्योत्स्ना ज्योत्स्नावती कान्तिः सुप्रभा विमलापि च ॥

अर्द्धचन्द्रोत्थिता ह्येताः कलाः पञ्च प्रकीर्त्तिताः ।
वन्धती बोधिनी बोधा ज्ञानबोधा तमोपहा ॥
निबोधिताः कलाः पञ्च कथिताः सुरसुन्दरि ।
ब्रह्मादिपरमेशानां परप्राप्तिनिबोधनात् ।
निबोधिकेति सा प्रोक्ता तस्या भेदाद्वरानने ॥
बोधिन्याख्यं यदुक्तं ते नादस्तस्योपरिस्थितः ।
पद्मकिञ्जल्कसङ्काशः कोटिसूर्य्यसमप्रभः ॥
पुरैः परिवृतोऽसंख्यैर्म्मध्ये पञ्चकलावृतः ।
इन्धिका दीपिका चैव रेतिका मोचिका तथा ॥
ऊर्द्ध्वगा मध्यगा तासां पञ्चमी परमा कला ।
चन्द्रकोटिसमप्रख्यं तन्मध्येऽर्व्वुदयोजनम् ॥
पद्ममध्ये समासीनमूर्द्ध्वगामिनमीश्वरम् ।
चन्द्रायुतप्रतीकाशं पञ्चवक्त्रं त्रिलोचनम् ॥
ऐन्दवाद्यैरावृतं च शूलपाणिं जटाधरम् ।
तस्योत्सङ्गगतामूर्द्ध्वगामिनीं परमां कलाम् ॥

ध्यायेदिति शेषः । निरालम्बामिति तद्वक्ष्यमाणात् । टीकाकारधृततन्त्रे—

त्यजेत् शैथिल्यसङ्गानां नासाग्रे रोपयेद्दृशौ ।
मुखं विवृणुयात् किञ्चित् दन्तैर्दन्तान् न संस्पृशेत् ॥
रसनामन्तरा कुर्य्यादनङ्गे धारयेन्मनः ।
इयं सा परमा मुद्रा निरालम्बेति पञ्चमी ॥

इह स्थाने एवं मुद्रां वद्ध्वा सदाभ्यासात् धृतपवनात् पवनसुहृदां वह्नीनां कलाः पश्यति । तदनन्तरं तन्मध्यान्तःप्रविलसितरूपान् ज्वलद्दीपाकारान् पश्यति । पश्चात् नवीनसूर्य्यप्रकाशाकारं गगनभूमध्यमिलितं पश्यति । इह स्थाने भगवान् साक्षात्कारविषयो भवति ।

ननु सर्व्वव्यापित्वात् अपरिच्छिन्नस्य ईश्वरस्य कथं परिच्छिन्नस्थाने अभिव्यक्तिरित्यत आह राहुरिति । यथा अम्बरगतो राहुर्न दृश्यते किन्तु

शशिसूर्य्ययोर्म्मण्डलमेव दृश्यते तथायं चिदात्मा एवम्भूतकर्म्मविशेषकरणात् अत्रैव साक्षाद्भवति। प्राणनिधने मरणकाले इह स्थाने प्राणान् वायून् ऊर्द्ध्वगामिन्या नाड्या समारोप्य वेदान्तविदितं "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिविदितं परं नित्यं देवमित्यादिविशेषितं पुरुषं प्रविशति।

तथा गीतायामपि—

प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्म्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्॥

इति॥ *॥

लयस्थानं वायोरिति। तदुपरि पूर्व्वोक्तनादोपरि चकारात् नादस्यापि लयस्थानम्। यत्र वायुर्नादश्च अथैनं जगदधरीकृत्य ब्रह्मरन्ध्रस्यादिस्थाने प्रलीयते तत् वायोर्नादस्यापि लयस्थानं नादान्तमिति यावत्। अत्र अर्द्धनारीश्वरोऽस्तीत्याह महानन्दमित्यादिना। महान् आनन्दो यत्र तं महानन्दस्वरूपम्। शिवार्द्धं शिवाया अर्द्धं शिवस्याकारम् अर्द्धनारीश्वरमित्यर्थः।

तथा च श्रीक्रमे—

चेतसा संप्रपश्यन्ति नादान्ते वृषभध्वजम्।
तमर्द्धदेहं वरदं कारणत्रयमातरम्।
पुटद्वयविनिष्क्रान्तो वायुर्यत्र प्रलीयते॥

स्वच्छन्दसंग्रहेऽपि—

हलाकारस्तु नादान्ते भित्त्वा सर्व्वमिदं जगत्।
अधःशक्त्या विनिर्भेद्य ऊर्द्ध्वशक्त्यवसानकम्॥
नाड्या ब्रह्मविले लीनस्त्वव्यक्तो ध्वनिलक्षणः।
अतो ब्रह्मविलं ज्ञेयं रुद्रकोट्यर्व्बुदैर्युतम्॥
तत्र ब्रह्मशिवो ज्ञेयः शशाङ्कशतसन्निभः।
दशबाहुस्त्रिनेत्रश्च पञ्चवक्त्रेन्दुशेखरः॥
ब्रह्माणी त्वपरा शक्तिः ब्रह्मणोत्सङ्गगामिनी।
द्वारं सन्मोक्षमार्गस्य रोधयित्वा व्यवस्थिता॥

हलाकारो लाङ्गलसदृशः।

देवीस्थानं सहस्रारं प्रविशेदकुलं प्रिये।

इति श्रीक्रमादकुलाख्यसहस्रारपद्ममाह तदूर्द्ध्वे इत्यादिना। शङ्खिन्या नाड्याः शिखरे अग्रे शून्यदेशे चित्रिण्या मेरुदण्डस्य च शून्यदेशे तेन सहस्रारं न मेरुदण्डस्य मध्ये न चित्रिण्या ग्रथितम्।

मायातन्त्रेऽपि—

मूलादिषट्सरोजातं चित्रिणीग्रथितं प्रिये।
लिङ्गाधोर्द्ध्वनाभिवक्षःकण्ठभ्रूमध्यदेशजम्॥

अतएव स्वच्छन्दसंग्रहे—

द्वादशार्णं ललाटोर्द्ध्वं रूपिणाद्यवसानकम्।
द्व्यङ्गुलोर्द्ध्वशिरोदेशं परं व्योम प्रकीर्त्तितम्॥

श्रीक्रमे—

आसव्यकर्णात् देवेशि शङ्खिनी च शिरोपरि।

इत्याद्यनन्तरम्।

शङ्खिनीनालं संप्राप्य चास्थिशून्यं विभर्त्ति यः।
अमृतं यत् त्रिकूटस्थं परमानन्दलक्षणम्॥
सहस्रारं महापद्मं रक्तकिञ्जल्कशोभितम्।
द्रुतहेमाम्बुजं जातधारपातप्रवर्षणम्॥
विसर्गाधः पद्ममिति सर्गः शक्तिर्निशाकरः॥ इति॥

नारदोक्तेन विसर्गस्य सहस्रारपद्मधारिण्या ऊर्द्ध्वस्थितायाः शक्तेरधःपद्मम्। निर्व्वाणपद्धत्यामपि—

कुलरूपं भवेत् शक्तिः विसर्गमण्डलं प्रिये।
सहस्रारं महापद्मं रक्तकिञ्जल्कशोभितम्॥

सारसमुच्चयेऽपि "सहस्रारपद्मं विसर्गादधस्तात्"। पूर्णपूर्णेन्दुशुभ्रं पूर्णं पीयूषपूर्णं तच्च पूर्णेन्दुशुभ्रञ्चेति तत्। बालसूर्य्यरश्मिसमकेशरसमूहो यस्य तत्। पद्मन्तु शुक्लवर्णम्।

यथा मायातन्त्रे—

महाशून्ये सहस्रारं निशाकरसहोदरम् ।
अधोवक्त्रं कर्णिकायाः चन्द्रोर्द्धे शक्तिरूपिणी ॥

ललाटाद्यैरकाराद्यैः समस्तमातृकाक्षरैः युक्तम् । तन्मध्ये पूर्णचन्द्रः स्निग्धसन्तानं हसतीति स्निग्धसन्तानहासी । तस्यान्तश्चन्द्रमण्डलस्य मध्ये त्रिकोणं तत्तु अकथादित्रिरेखात्मकं तत्त्रिकोणे हलक्षवर्णत्रयम् । तदन्तस्त्रिकोणमध्ये शून्यं परलिङ्गं परलिङ्गस्य तेजोवर्णत्वात् शून्यं शून्याकारमिति यावत् ।

तथाच गौतमीये—

सहस्रारे हिमनिभे सर्व्ववर्णविभूषिते ।
अकथादित्रिरेखासु हलक्षत्रयभूषिते ।
तन्मध्ये परविन्दुञ्च सृष्टिस्थितिलयात्मकम् ॥

योगिनीहृदये—

सूक्ष्मरूपं समन्तात्तु वृतं परमलिङ्गकम् ।
विन्दुरूपं परानन्दकन्दं नित्यं पदोदितम् ॥

व्याख्यातञ्च अमृतानन्दस्वामिना यथा परलिङ्गस्य तेजोवर्णः द्वादशवर्णो हंसः अतः सूक्ष्मरूपम् अतएव विन्दुरूपं नित्यञ्च मातृकात्वादुत्पत्तिविनाशरहितम् । पदात् पदं प्राप्य उदितं प्रकाशितम् । तदेवाह परमामोदसन्तानराशेः परं कन्दं सूक्ष्ममिति । शशिसमस्तकलाशुद्धरूपम् । "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिबोधितो यः परशिवः स द्विधा भूत्वा परमशिवाख्यः सगुणः शिवः प्रकाशात्मा अत्र परविन्दुचक्रे निवसति इत्याह इह स्थाने इत्यादिना । परशिवसमाख्यानसिद्धप्रसिद्धं यस्य सः ।

तदुक्तं सङ्केतपद्धत्याम्—

अकारः सर्व्ववर्णाग्र्ये प्रकाशः परमः शिवः ।
हकारो नित्यकला प्रोक्तो विमर्षाख्यः प्रकीर्त्तितः ।
अनयोः सामरस्यं यत् परस्मिन् महसि स्फुटम् ॥

तत्र अमृतानन्दस्वामिनः अ इति ब्रह्मश्रुत्या अकारवाच्यः परशिवः

तस्यांशित्वेन परमशिवोऽप्यकारवाच्यः प्रकाशरूपब्रह्मांशित्वात्। विमर्षाख्यः विमर्षिणी सशक्तिरित्यन्तेनाह "सर्व्वात्मा पुरुष एवेदं सर्व्वं यद्भूतं यच्च भाव्यम्" इति श्रुतेः। रसो द्रव्यविशेषः पर इति प्रसिद्धस्तस्य विसरः समूहस्तद्वल्सितः शुक्लः। "सन्दोहविसरव्रजाः" इत्यमरः। अज्ञानमोहान्धस्य हंसः सूर्य्यः सुधाधारासारं अतितरां विमुञ्चन् यतः स्वात्मज्ञानं स्वस्य शिवाभेदज्ञानं दिशति। भगवान् ऐश्वर्य्यादियुक्तः स परमशिवः परमहंस इत्याह समास्ते इत्यादिना। सकलसुखसमूहस्य लहरी तरङ्गः तस्य परीवाहः। "जलोच्छ्वासाः परीवाहाः" इत्यमरः। परम इति नाम्ना समुचितः परमहंस इत्यर्थः। स च मायावच्छिन्नः। तथाच तन्त्रान्तरे—

सरोरुहमधोमुखं प्रविलसत् सहस्रच्छदं

क्रमादरुणकेशरप्रकरभास्वरनिर्म्मलम्।

तदन्तरपि चिन्तयेदमृतरोचिषो मण्डले

पुराणपुरुषं परं परिगतं महामायया॥ इति॥

मायोपाधिविनिर्म्मुक्तं शुद्धमित्यभिधीयते।

मायासम्बन्धतश्चेशो जीवोऽविद्यावशस्तथा॥

इति वेदान्तोक्तेः। शिव इत्यादि स्पष्टम्। परमपुरुषमिति भारते—

अव्यक्तं मन इत्याह शरीरं परमुच्यते।

अव्यक्तके पुरे शेते पुरुषस्तेन चोच्यते॥

खगतिः खेचरः स्यात्। यद्वा खे ब्रह्मणि गतिः स्यात्। "खं ब्रह्म" इत्याद्युपनिषत्। ऊर्द्ध्वशक्तिरूपां कलामाह तत्रास्ते इत्यादिना। प्रातःसूर्य्यतुल्या चन्द्रस्य षोड़शकला अमानाम्नीति यावत्।

अमा षोड़शभागेन देवि प्रोक्ता महाकला।

संस्थिता परमा माया देहिनां देहधारिणी॥

इति वचनात्। सूक्ष्मत्वात् शतधाविभक्तमृणालतन्तुभागैकरूपा चयोदयरहितत्वान्नित्या अधोमुखी स्रध्युन्मुखी। पूर्णानन्दसमूहो यस्याम्। या अभिगलत्पीयूषधारा तस्या धरा।

स्वच्छन्दसंग्रहे—

ब्रह्माणी त्वपराशक्तिः ब्रह्मणोत्सङ्गगामिनी ।
द्वारं सुमोक्षमार्गस्य रोधयित्वा व्यवस्थिता ॥
तां भित्त्वा तु वरारोहे ऊर्द्ध्वशक्तिं परां शिवाम् ।
शक्तितत्त्वात्मिकां देवीं प्रसुप्तभुजगाकृतिम् ॥
शक्तितत्त्वं समाख्यातं भुवनैराश्रितं महत् ।
शक्तिं तत्त्वात्मिकामूर्द्ध्वशक्तेरुपरि संस्थिताम् ॥

योगिनीहृदयेऽपि—

शक्तौ पुनर्व्व्यापिकायां स मनोन्मनीगोचरे ॥ इति ॥

व्यापिनीतत्त्वं शक्तितत्त्वस्वरूपमाह निर्व्वाणाख्य इत्यादिना । सूक्ष्मत्वात् सहस्रधाविभजितस्य केशभागस्यैकभागतुल्या अर्द्धचन्द्रवत् कुटिला सर्व्वार्कतुल्यप्रभा द्वादशादित्यप्रभा । परात् षोड़श्याः कलायाः परतः । तदन्तर्गता चन्द्रमण्डलान्तर्गता न तु षोड़श्याः कलायाः अन्तर्गता । यथा सारसमुच्चये षोड़शीं कलामभिप्रेत्य—

एतस्याः परतः स्थिता भगवती भूताधिदेवाधिपा
निर्व्वाणाख्यकलार्द्धचन्द्रकुटिला सा षोड़शान्तर्गता ।
वालाग्रस्य सहस्रधा विगलितस्यैकेन भागेन या
सूक्ष्मत्वात् सदृशी त्रिलोकजननी या द्वादशार्कप्रभा ॥ इति ॥

स्वच्छन्दसंग्रहे—

षोड़शान्तमिति ख्यातं व्योमस्थानेन्दुमण्डलम् ॥ इति ॥

तत्रैव—

आधारं भावनानाञ्च प्रवक्ष्यामि समासतः ।
सूक्ष्मा चैव सुसूक्ष्मा च तथाचैव मृतामृता ॥
चतुर्द्दिक्षु स्थितास्तासां मध्यस्था व्यापिनी स्मृता ।
पञ्चवक्त्रा त्रिनेत्रा च सतेजाख्या च पञ्चमी ॥ इति ॥

समनापदमाह एतस्या इत्यादिना । परं उत्तरकालं मातीति परमा

ध्वंसरहिता नित्येत्यर्थः। सूक्ष्मत्वात् केशाग्रस्य कोटिभागैकभागरूपा अतः अतिगुह्या। निरवधि विलसन्ती या अमृतधारा तस्या धरा। मुनिमनसि लसिततत्त्वबोधं शिवाभेदज्ञानं वहन्ती।

इदन्ते तु तयोरैक्यमिति विद्या निगद्यते॥

इति परापञ्चशिकावचनात् ब्रह्मणोऽतिनैकट्येन तथोक्तम्। तथा—

समनान्तर्व्वरारोहे पाशजालमनन्तकम्।

इति वचनात् अत्रापि पाशजालम्। एतस्या निर्व्वाणकलायाः मध्यदेशे इति सामीप्ये सप्तमी। तथाच मध्यदेशसमीपे किञ्चिदुपरीत्यर्थः।

तथाच स्वच्छन्दसंग्रहे—

चिदानन्दस्वरूपा तु परा शक्तिस्तदूर्द्ध्वतः।
समना नाम सा शक्तिः सर्व्वकारणकारणम्॥
सर्व्वान्तानि विभर्त्तीयं शिवेन समधिष्ठिता।
अत्र रूढ़ः स भवति शिवः परमकारणम्।
शिवः सर्व्वस्य कर्त्तेयं शक्तिः कारणमुच्यते॥

उन्मनीपदमाह तस्या मध्यान्तराले इत्यादिना। तस्याः समनायाः मध्यान्तराले अत्र सामीप्ये सप्तमी। शिवपदं शिवतनुप्राप्तिस्थानम् उन्मनीति यावत्।

स्वच्छन्दसंग्रहे—

शिवतनुं समाख्यातं तदूर्द्ध्वं शक्तितनुतः। इति।

तथा तत्रैव—

शिवशक्तिद्वयञ्चैव शिवतनुं प्रकीर्त्तितम्।

सूक्ष्मार्थशक्त्यवच्छिन्नं शिवतनुमित्यर्थः।

तथाच तत्रैव—

यावत् सा समना शक्तिस्तदूर्द्ध्वे उन्मनी स्मृता।
नात्र कालकलाभानं न तनुं न च देवताः॥
अनिर्व्वाणं परं शुद्धं रुद्रवक्त्रं तदुच्यते।
शिवशक्तिरिति ख्याता निर्व्विकल्पा निरञ्जना॥

तत्त्वातीतं वरारोहे—

इत्यादि अग्रे लिखिष्यते। मनःसहितत्वात् समना। "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुत्या मनोऽतीतत्वान्मना इत्यमृतानन्दस्वामिनः।

शक्तिमध्यगतो नादः समनान्तं प्रसर्पति॥

इति स्वच्छन्दसंग्रहात् नात्र कालकलांशस्य भानम्। परमकुलपदमिति परं उन्मन्याः परं अकुलपदम् अकुलाख्यपरशिवात्मकपदं विश्वस्य विश्रामस्थानत्वात्। पदमिति अमलं सत्त्वादित्रिगुणयुक्तम्। शाश्वतं नित्यम्। योगिन प्राप्तं नित्यानन्दमभिधानं यस्य तत्। "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतेः। शुद्धबोधस्य शुद्धज्ञानस्य प्रकाशो यस्मात्। तथाच टीकाकारधृततन्त्रे "उन्मन्यन्ते परशिवः" इति। स्वच्छन्दसंग्रहे उन्मनीमभिधाय—

तत्त्वातीतं वरारोहे वाङ्मनो नैव गोचरम्।

"यतो वाचो निवर्त्तन्ते" इत्यादि श्रुतेः। तत्त्वं "तत्त्वमसि" इति श्रुतेः।

स्वाभाविके परे धाम्नि विवरं तत्त्वसंज्ञकम्॥

इति शिवतन्त्रात्।

श्रीमते—

अकुलेश्वरदेवस्य सम्बन्धः प्रथमः स्थितः।
रूपातीतः परो विन्दुः शक्त्या वेष्टितभास्वरः।
अतो नादो विरोधी च अर्द्धचन्द्रसमुत्क्रमात्॥
एतत्तु पञ्चमप्रोक्तं ज्ञानरत्नं महोदयम्।
तत्र तद्दक्षिणं षट्कमाज्ञापूर्व्वं कुलोद्भवम्॥ इति॥

नियतनिजचित्त इति। गौतमीये—

अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं दयार्ज्जवम्।
क्षमा धृतिर्म्मिताहारः शौचञ्चेति यमा दश॥
तपः सन्तोषमास्तिक्यं दानं देवस्य पूजनम्।
सिद्धान्तश्रवणञ्चैव ह्रीर्म्मतिश्च तपो हुतम्।
दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः॥ इति॥

तथाच एतद्द्वयाभ्यासशीलः श्रीनाथवक्त्रात् गुरुवक्त्रात् मोक्षवर्त्मप्रकाशं क्रमं ज्ञात्वा हुङ्कारेण मूलाधारस्थितवह्निपवनयोराक्रमेण तप्तां कुण्डलिनीं कृत्वा निद्रितां तां बोध्य तल्लिङ्गं स्वयम्भूलिङ्गं भित्त्वा कुण्डलिनीवेष्टनस्य भेदं कृत्वा ब्रह्मद्वारस्य मध्ये तां रचयति । रुद्रयामले—

हुङ्कारेण समुत्थाप्य शक्तिं स्वाधारसंस्थिताम् ।

ततः सा प्रबोधिता तल्लिङ्गत्रयं स्वयम्भूबाणेतरलिङ्गत्रयं भित्त्वा भेदं कृत्वा तच्छिद्रेण ब्रह्माख्याया इति ल्यब्लोपे पञ्चमी ब्रह्मनाड़ीमारुह्य सकल-सदनं प्राप्य परमरसयुक्तशिवे परमशिवे प्रदीपाभे देदीप्यते। ततः सा शुद्धस्वभावा सूक्ष्मतालक्षणेन तड़िदिव तत्तन्तुरूपा तन्मोक्षानन्दं घटयति। नयवशात् नीतिवशात् । समाधौ यतो योगीशः तां कुलकुण्डलिनीं जीवात्मना सार्द्धं मोक्षधाम्नि परमशिवे सच्चिदानन्दरूपे भगवतीं चैतन्यरूपां ध्यायेत् । तन्त्रान्तरे—

ध्यै चिन्तायां स्मृतो धातुश्चिन्तातत्त्वेन निश्चला ।
एतद्ध्यानमिह प्रोक्तं सगुणं निर्गुणं द्विधा ।
सगुणं वर्णभेदेन निर्गुणं केवलं तथा ॥

अन्यत्रापि—

मज्जीवब्रह्मणोरैक्यं सोऽहं स्यादिति वेदनम् ।
तन्निर्गुणमिदम् । इत्यादि ।

ततो लाक्षाभं रक्तवर्णं परमामृतं कुण्डलिनी पीत्वा पूर्णानन्दमहोदयात् परशिवात् शिवसकाशात् प्राक्पादितोत्मन्यादिसृष्टिमार्गेण कुलपथात् कुल-पथमारुह्य ब्रह्म रुह्य मूलाधारे स्वस्थाने प्रविशेत् । ततो योगी तद्दिव्यामृत-धारया योगपरम्पराप्राप्तया ब्रह्माण्डस्थितं शरीरस्थं दैवतं डाकिन्यादिकं तर्पयेत् प्रीणयेत् । श्रीनाथवक्त्रादिति यदुक्तं तत् गोरक्षसंहितादौ स्पष्टीकृतम् । यथा—

प्रबुद्धा वह्नियोगेन मनसा मारुता हता ।
शूचीव गुणमादाय व्रजत्यूर्द्धं सुषुम्नया ॥

ज्वलन्ती भुजगाकारा पद्मतन्तुनिभा शुभा।
उद्घाटयेत् कवाटञ्च यथा कुञ्चिकया दृढ़म्।
कुण्डलिन्या तथा योगी ब्रह्मद्वारं प्रभेदयेत्॥
कृत्वा संपुटितौ करौ दृढ़तरं बद्धा तु पद्मासनं
गाढ़ं वक्षसि सन्निधाय चिवुकं ध्यानञ्च तच्चेतसि।
वारंवारमपानमूर्द्ध्वमनिशं प्रोत्सारयन् पूरयन्
प्राणं मुञ्चति मोक्षमेति शनकैः शक्तिप्रभावात् यतः॥

कुञ्चिकया कुलुपकारीत्याख्यया। निर्व्वाणपञ्चत्यामपि—

आदौ पूरकयोगेन स्वाधारे योजयेन्मनः।
गुदमेढ्रान्तरे योनिस्तामाकुञ्च्य प्रबोधयेत्॥
भ्रमद्‌योनिगतं ध्यायेत् कामं वन्धूकसन्निभम्।
ज्वलत्कालानलप्रख्यं तड़ित्कोटिसमप्रभम्॥
तदूर्द्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमा कला।
तया सहितमात्मानमेकीभूतं विचिन्तयेत्॥
गच्छन्ती ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु।
अमृतं यद्विसर्गस्थं परमानन्दलक्षणम्॥
द्रुतरक्तं सतेजाढ्यं धारापातप्रवर्षणम्।
पीत्वा कुलामृतरसं पुनरेव कुलं विशेत्॥
सा च प्राणः समाख्यातस्तन्त्रेऽस्मिन् परमेश्वरि।
एवमभ्यस्यमानस्य अहर्निशनिवन्धनात्।
चतुर्व्विधा तु या सृष्टिरस्यां योनौ प्रजायते॥
पुनः प्रलीयते तस्यां कालाग्न्यादिशिवान्तिकम्।
योनिमुद्रा परा सा तु वन्धस्तस्याः प्रकीर्त्तितः॥

चतुर्व्विधेति नैयायिकमते पुरुषात्। सांख्यमते प्रकृतिपुरुषाभ्याम्। पातञ्जलमते प्रकृतितः। मीमांसामते अदृष्टात् सृष्टिः। तत्र योगी द्विविधः।

यथा सारदायाम्—

पिण्डं भवेत् कुण्डलिनी शिवात्मा पदञ्च हंसः सकलान्तरात्मा ।
रूपं भवेत् विन्दुरमन्दकान्तिरतीतरूपं शिवसामरस्यम् ॥
पिण्डादियोगं शिवसामरस्यात् सवीजयोगं प्रवदन्ति सन्तः ।
शिवे लयं नित्यगुणाभियुक्ते निर्वीजयोगं फलमव्यपेक्षम् ॥ इति ॥

तथान्यत्र—

दिक्कालादिविवर्ज्जिते परशिवे चैतन्यमात्रात्मिके । इत्यादि ।

स्वच्छन्दसंग्रहेऽपि—

पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्त्तितः ।
रूपं विन्दुरिति ख्यातं रूपातीतस्तु चिन्मयः ॥

तत्रान्तरेऽपि—

पिण्डे युक्ताः पदे युक्ता रूपे युक्ताः षड़ानन ।
रूपातीते तु ये युक्तास्ते मुक्ता नात्र संशयः ॥

मतभेदे अनेकानि पद्मान्याह स्वच्छन्दसंग्रहे—

अधश्चोर्द्ध्वं सुषुम्नायाः सहस्रदलसंयुतम् ।
रक्तं श्वेतञ्च साहस्रदलस्थं शक्तिसंयुतम् ॥
ऊर्द्ध्वाधो मुखमूलन्तु कर्णिकाकेशरान्वितम् ।
शक्तिरूपं महादेवि कुलाकुलमयं शुभम् ॥
पङ्कजद्वयमीशानि स्थितं शाश्वतमव्ययम् ।
तयोर्म्मध्ये सुषुम्नान्तस्त्रिंशदाधारपङ्कजम् ॥
शक्तिरूपं शिवाकारं सर्व्वाध्यासं निजालयम् ।

नीलेति शेषः । तथा कियत् कियदूर्द्ध्वे पङ्कजानि ।

तदाह तत्रैव—

आधारपङ्कजस्योर्द्ध्वे सार्द्धद्वाङ्गुलकोपरि ।
तैजसं साष्टपत्रञ्च पीतकर्णिकया युतम् ॥

ह्रल्लेखा कर्णिकामध्ये स्थिता लिङ्गादिदेवता।
एतस्मात् द्व्यङ्गुलस्योर्द्ध्वं स्वाधिष्ठानं षड़स्रकम्॥
आप्यञ्च राकिणीशक्तिः पूर्व्वाभिः शक्तिभिर्युतम्।
ततश्च भावयेद्देवि नाभिमष्टाङ्गुलोपरि॥
तत्पद्मं मणिपूरञ्च दशपत्रं सुशोभितम्।
लाकिनीमध्यगं तच्च तामर्थादाभिरावृतम्॥
चतुर्द्दशाङ्गुलादूर्द्ध्वं मणिपूराख्यपङ्कजात्।
पङ्कजं काकिनीमध्यं वायव्यं द्वादशारकम्॥
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम्।
तत्रस्थसूर्य्यविम्बे च नादो यानादिपीठकम्॥
एकादशाङ्गुलादूर्द्ध्वं विशुद्धं षोड़शच्छदम्।
मध्यगा शाकिनी वाह्यपत्रेषु परमेश्वरि॥
अमृताद्यचरान्तस्था चन्द्रविम्बं तदूर्द्ध्वगा।
कण्ठोर्द्ध्वं परमेशानि लम्बिका चतुरङ्गुली॥
आज्ञाचक्रं द्विपत्राब्जं हत्त्वद्विदलसंयुतम्।
हंसवती चमा पार्श्वद्वये मध्ये तु हाकिनी॥ * ॥

तन्त्रान्तरे ब्रह्मणः स्वाधिष्ठानमुक्तं यथा—

स्वाधिष्ठानं षड्दलोपेतमुद्यत्विद्युत्प्रेच्चं वादिलान्तैश्च वर्णैः।
युक्तं सावित्रीसहितं विरिञ्चिं ध्यायेदस्मिन् राकिणीं देवताञ्च॥

योगिनीहृदये—

एताश्चतस्रः शक्तयस्तु का पूजा तु इति क्रमात्।
पीठाकन्दे पदे रूपे रूपातीते क्रमाद्विदुः॥

एतास्तत्र पूर्व्वोक्ता अम्बिकादयः चतस्रः कामरूपादिपीठत्वेन परिणताः। तथा च मूलाधारे कामरूपं हृदि पूर्णगिरिः भ्रूमध्ये जालन्धरः सहस्रारे उड्डीयानः। न च "एकमेवाद्वितीयं ब्रह्म" इत्यादि श्रुत्या ब्रह्मण एकत्वमभिहितम्। शक्तिस्तावत् केति चेत् तद्ब्रह्मशिवशक्तिसामरस्यपरत्वमेव।

यथा कुलार्णवे—

अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ।
मम तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ॥

स्वच्छन्दसंग्रहेऽपि—

अनयोः सामरस्यं यत् परस्मिन् महसि ध्रुवम् ।

कूर्म्मपुराणे ईश्वरगीतायां शिववाक्यम्—

एकया मम सायुज्यमनादिनिधनस्फुटम् ।
पुंसोऽभूदन्यया भूतिमन्यया तत्तिरोहितम् ॥

एकया मायात्मिकया शक्त्या विशिष्टस्य मम अनादिनिधनं सायुज्यं सहयोगं अर्द्धनारीश्वरात्मकमभूत् । अन्यया आद्यया ज्ञानात्मिकयेति यावत् विशिष्टपुंसो भूतिं उत्पत्तिं जानीहि अन्यया चित्शक्त्या तत् तिरोहितम् । तयैव क्षणे तिरोहितम् । ब्रह्माविनाभूतम् ।

अतएव तैत्तिरीयवाक्यम्—

यत्तु मे निष्कलं रूपं चिन्मात्रं केवलं शिवम् ।
सर्व्वोपाधिविनिर्म्मुक्तमनन्तमपरं परम् ॥

कालिकापुराणेऽपि—

चितिशक्तिं विनाकारां परं ब्रह्मस्वरूपिणीम् ॥

जन्मखण्डे राधिकां प्रति कृष्णवाक्यम्—

यदा तेजःस्वरूपोऽहं तेजोरूपासि त्वं तदा ।
न शरीरी यदाहञ्च तदा त्वमशरीरिणी ॥

तन्त्रेऽपि—

न शिवेन विना शक्तिः न शक्त्या रहितः शिवः ।
अतस्तयोरभेदश्च चन्द्रचन्द्रिकयोरिव ॥

वेदान्तेऽपि "चिच्छक्तिर्ब्रह्माश्रिता ।" तथा—

मायोपाधिविनिर्म्मुक्तं शुद्धमित्यभिधीयते ।
मायासम्बन्धतश्चेशो जीवोऽविद्यावशस्तथा ॥

इत्युक्तम्। तदेव सामरस्यं परं ब्रह्म सगुणशिवं शक्त्यादिनानारूपेण परिणमते। यथा विश्वसारे—

कालेन प्रेरयेन्मायां सृष्टेरुत्पत्तिहेतवे।
या मूलप्रकृतिः प्रोक्ता सा माया परिकीर्त्तिता॥
योऽयं सदाशिवः प्रोक्तः स एव पुरुषः परः।
एकं ब्रह्म द्विधा भूत्वा सृष्टिरेषा विधीयते॥
अर्द्धेन वनिता भूत्वा अर्द्धेन पुरुषस्तथा।
तावुभौ च समौ कृत्वा सृष्टिव्यक्तिं नयेत् सुधीः॥

मायावच्छिन्नेश्वरस्य षड़ङ्गान्याह कूर्म्मपुराणादौ—

सर्व्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्व्विधिज्ञाः षड़ाहुरङ्गाणि महेश्वरस्य॥ * *॥

नारायणो वैदिकश्च भट्टाचार्य्यः समीरितः।
तस्यात्मजो वामदेवभट्टाचार्य्यस्तथैव च।
तस्यात्मजो विश्वनाथस्तेनेयं रचिता मुदा॥

इति षट्चक्रविवृतिटीका

सम्पूर्णा।

---

वलदेवटीकाकारधृतः षट्चक्रनिरूपणस्याधिकः श्लोकः ।

इह स्थाने चित्तं निरवधि निधायात्तपवनो
यदि क्रुद्धो योगी चलयति समस्तं त्रिभुवनम् ।
न च ब्रह्मा विष्णुर्न च हरिहरौ नैव खमणि-
स्तदीयं सामर्थ्यं शमयितुमलं नापि गणपः ॥ ३१ ॥ (१)

---

इह स्थान इति । इहस्थाने विशुद्धाख्यपद्मे निरवधि प्रतिक्षणं चित्तं मनो निधाय सम्बध्य आत्तपवनः गृहीतवायुः सन् कुम्भकं कृत्वेति यावत् । योगी जनः यदि क्रुद्धो भवति तदा समस्तं त्रिभुवनं चलयति । तदीयं सामर्थ्यं योगिन एतादृशत्रिभुवनचालनबलं शमयितुं ब्रह्मा सृष्टिकर्त्ता विष्णुः पालनकर्त्ता हरिहरः हरिहरात्मक ईश्वरः खमणिः सूर्य्यः गणपः गणेशः एते नालं न समर्था इत्यर्थः ॥

ॐ श्रीश्रीगुरवे नमः।

सरोजमधु सादरं सरसि मानसे सर्व्वदा
यथाददति षट्पदा नतु कदापि शैवालकम्।
तथैव गुणिनो बुधा वचसि दूषणात्यागतो
ममाददतु साम्प्रतं यदि गुणास्तमित्यर्थये॥

इह खलु दुःखजालसङ्कुलसंसारलब्धजनुषां परमपुरुषध्यानैकनिष्ठचेतसामपि मानुषाणां स्वाभ्यन्तरवर्त्तिषट्चक्रनिरूपणभेदादिज्ञानं विना मोक्षोपायः कोऽपि नास्तीति परमकारुणिको भगवान् परमेश्वरः दुःखसमवायात्तानुद्दिधीर्षुः पर्व्वतराजपुत्त्रीप्रश्नानुसारेण स्वप्रोक्ततन्त्रशास्त्रमहोदधीनन्तरान्तरा षट्चक्रनिरूपणं तद्भेदादिसङ्केतञ्च उपदिदेश। किन्तु तदुपदिष्टतन्त्रशास्त्राणामतीव बाहुल्यादशक्यबोधत्वाच्चाधुनिकाः स्वल्पायुषो जनाः परमपुरुषप्रोक्ततन्त्रशास्त्राणां सारांशमायत्तीकर्त्तुमनीशाः सन्तो नियतं निरयमेव गच्छन्तीति परपरित्राणपरायणः परमपुरुषसमाहितचेताः श्रीमत्पूर्णानन्दयतिः निखिलतन्त्रशास्त्रसारमुद्धृत्य तदर्थाविरोधिभिः स्वकल्पितपञ्चपञ्चाशच्छ्लोकैः षट्चक्रस्थितिस्थाननिरूपणतद्भेदसङ्केतसन्दर्भितं षट्चक्रनिरूपणं स्वरचित श्रीतत्त्वचिन्तामण्यां कृतवान्।

तस्य च पूर्व्वापेक्षया सहजबोधगम्यत्वेऽपि सारांशप्रकाशकटीकाया अभावात् अशक्यार्थबोधोऽयं ग्रन्थ इति प्रायश एव उपेक्षित आसीत्। इदानीन्त्वस्माभिस्तत्परिजिहीर्षया प्रचुरतरार्थव्ययेन साधनासिद्धबोधविद्वदग्रगण्यश्रीमत्कालीचरणप्रणीता निगूढ़ार्थप्रकाशिनी कापि टीका संगृह्य पण्डितमण्डलीपरिशोधिता कृत्वा पुस्तकेऽस्मिन्निवेशिता। साम्प्रतन्त्वनया

विद्वांसो यदि कथञ्चिदप्यानुकूल्यभागिनो भवन्ति तदैवास्माकमर्थव्ययं परिश्रमञ्च सफलं मन्यामहे ।

किञ्च बहुलविस्तृतश्रीकालीचरणप्रणीतटीकावलोकनेन कियदपि कालक्षयं कर्त्तुमनीशानां विषयासक्तचेतसां झटिति मूलवृत्तान्तपरिज्ञानार्थं विद्वत्कुलचूड़ामणिशङ्करविरचिता मूलतत्त्वार्थविवृतिकारिकाऽपरापि टीका सन्निवेशिता ।

यस्तु

इह स्थाने चित्तं निरवधि निधायात्तपवनो
यदि क्रुद्धो योगी चलयति समस्तं त्रिभुवनम् ।
न च ब्रह्मा विष्णुर्न च हरिहरो नैव खमणि-
स्तदीयं सामर्थ्यं शमयितुमलं नापि गणपः ॥

इति श्लोकः विद्वत्कुलशिरोभूषणश्रीमद्बलदेवविद्याभूषणकृतटीकासम्वलितमुद्रितषट्चक्रनिरूपणनामकपुस्तकान्तरे एकत्रिंशच्छ्लोकात् परमधिको दृश्यते स तु अस्मदुपजीव्यश्रीमत्कालीचरणशङ्कराभ्यामुपेक्षितत्वात् नैव पुस्तकाङ्गत्वेन निवेशितः किन्तु पुस्तकस्य समाप्त्यनन्तरं श्रीमद्बलदेवविद्याभूषणविरचितया टीकया सह सन्निवेशित इति ।

अपरञ्च विश्वोत्तारणकारणश्रीमन्महेश्वरवदनपङ्कजविनिर्गतकैवल्यकलिकानामधेयतन्त्रस्य षट्चक्रनिरूपणात्मकद्वितीयपटलेन सार्द्धं सिद्धाचार्य्यवर्य्यश्रीमत्पूर्णानन्दयतिविरचितषट्चक्रनिरूपणात्मकश्लोकसमूहानां प्रायशोऽभिन्नत्वेऽपि क्वचित् क्वचित् पाठवैषम्यस्य कैवल्यकलिकातन्त्रद्वितीयपटलटीकाकृच्छ्रीमद्विश्वनाथसूरिवाक्येनानुमीयमानत्वात् तत्प्रणीतषट्चक्रविवृत्याख्यया टीकयापि पुस्तकमिदमलङ्कृतकलेवरमासीत् ।

किन्तु दुःखं पुनरेतदनुभूयते यद्बहुतरार्थव्ययं परिश्रमञ्च स्वीकुर्व्वद्भिः कुत्रापि कैवल्यकलिकातन्त्रं नोपलब्धं नापि दृष्टं सुतरामेव कैवल्यकलिका-तन्त्रमलभमानैरनन्योपायैरस्माभिः कैवल्यकलिकातन्त्रेण श्रीमत्पूर्णानन्दयति-विरचितस्य षट्चक्रनिरूपणात्मकश्लोकसमूहस्य पाठादिवैषम्यं परिदर्शयितु-मनीशैर्मूकैर्भूयते इति ।

अन्यच्च आर्य्यधर्म्मावलम्बिनां सर्व्वेषामेव श्रीगुरुराराधनीय इति पूर्व्व-पूर्व्वाचार्य्यशिष्टाचारपरम्पराप्राप्तत्वात् जगद्गुरुरपीश्वरः श्रीगुरुपादुकापञ्चक-स्तोत्रव्याजेन श्रीगुरोः स्वीयाराध्यतां दर्शयन् सर्व्वानुपदेष्टुं पादुकापञ्चकं नाम स्तोत्रमकार्षीत् तदपि विद्वत्प्रवरश्रीमत्कालीचरणविरचितया गूढ़भावार्थ-प्रकाशिकया अमलाख्यटीकया षट्चक्रविवृतेः प्राक् ग्रन्थेऽस्मिन् सन्निवेशित-मिति ।

सम्पादकस्य निवेदनम् ।

---

# सूचीपत्रम् ।

---

सूचीपत्रं सम्पूर्णम् ।